भावकार्यत्वात् घटादिवत् इत्यनुमानात् । क्रियागुणादेरपि साश्रयस्यैवोत्पत्तेरु-त्पद्यमानाश्रयस्यैवोपादानत्वात् । नन्वात्मान्तःकरणं वा भ्रान्तिज्ञानोपादानं भविष्यति न । आत्मनो ऽपरिणामित्वात् अन्तःकरणस्य चेन्द्रियसंयोगादिसापेक्षत्वात् मिथ्यार्थे च प्रत्ययमात्रविपरिवर्तिनि तदयोगात् अधिष्ठानज्ञानेनान्यथासिद्धत्वाच्च तदन्वयव्यतिरेकयोरन्तःकरणस्य जडत्वादज्ञातृत्वात् आत्मनो ऽभ्रान्तत्वप्रसङ्गाच्च । तस्मान्मिथ्यार्थतज्ज्ञानात्मकं मिथ्याभूतमध्यासमुपादान-कारणसापेक्षं प्रत्यगाश्रयस्थानतया काचादिनिमित्तकारणेषु भिद्यमानेषु मिथ्या-भूतस्यैव सर्वकार्यस्वभावानुकूलस्य सर्वत्रानुगमादज्ञानस्यात्माश्रयतया भ्रान्ति-ज्ञानाश्रयकोटिनिक्षिप्तत्वाच्च मिथ्याज्ञानमेवाध्यासोपादानं नात्मान्तःकरणका-चादिदोषा इति सूक्तम् । आत्माश्रयाध्यासस्य शुक्तिकासंसर्गो विभ्रम इति वक्ष्यते । एकस्यैवाध्यासस्य नैसर्गिकत्वं नैमित्तिकत्वं च विरुद्धमिति चोदयति

२२ कथं पुनरिति ।

तत्र प्रथमं तावदध्यासप्रवाहजन्मनोपादानकारणरूपेण नैसर्गिकत्वं कार्यव्यक्तिरूपेण नैमित्तिकत्वमित्यविरोधं दर्शयितुमात्मनि भावरूपमज्ञानं

२३ साधयति अवश्यमेषा ऽविद्या शक्तिरिति । अवश्यमिति एषेति च प्रमाण-द्वयवत्तामाह । प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासद-र्शनात् । ननु ज्ञानाभावविषयो ऽयमवभासः । न । अपरोक्षावभासत्वादहं सुखी-तिवत् अभावस्य च षष्ठप्रमाणगोचरत्वात् । प्रत्यक्षाभाववादिनोपि नात्मनि वि-ज्ञानाभावावगमः सम्भवति । मयि ज्ञानं नास्तीतिप्रतिपत्तावात्मनि धर्मिणि प्रतियोगिनि चावगते तत्र ज्ञानसद्भावात् ज्ञानाभावप्रतिपत्त्ययोगादनवगते ऽपि धर्म्यादौ सुतरामभावानवगमात्षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेपि ज्ञानाभावे आत्मादाववगते ऽनवगते ऽप्यात्मनि ज्ञानाभावप्रतिपत्त्ययोगात् । इह च त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामीति विषयव्यावृत्तमज्ञा-नमनुभूय तच्छ्रवणादौ प्रवर्तते । भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रति-योगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते । न-चाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावान्तरस्याज्ञानस्य निवर्तकं तस्य ज्ञानविषयप्रतिभासत्वात् । नहि स्वज्ञानेनैव स्वयं निवर्तते । नन्व-ज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनावभास्यते प्रमाणायत्तत्वा-

द्विषयसिद्धेरिति । उच्यते । सर्वं वस्तु ज्ञाततया वाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते अन्यस्तु सामान्याकारेण विशेषाकारेण वा ऽज्ञानव्यावर्तकतया सदा भासत इत्युपपत्तिसहितमज्ञानप्रत्यक्षं भावरूपमेवात्मन्यज्ञानं गमयतीति सिद्धम् । अनुमानमपि विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हत्य ऽप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् । शक्तिरित्यात्मपरतन्त्रतया ऽऽत्मनः सर्वकार्योपादानत्वस्य नि * र्वोढृत्वमाह । तत्स्वरूपमात्मतत्त्वं तत्सनामात्रानुबन्धिनीत्यर्थः । किंच । ४ २३
अर्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणमित्याह अन्यथामिथ्यार्थावभासानुप- ,, २४
पत्तेरिति । विशुद्धब्रह्मात्मनि शुक्तिकायां चाहङ्काररजताध्यासस्यार्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचिदुपादानमन्वेषणीयम् । सत्योपादानत्वे कार्यस्य कारणस्वभावतया ऽध्यासस्यापि सत्यत्वप्रसङ्गात् । तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गादनाद्येव तन्मिथ्योपादानमिति कल्पनीयम् । यच्चानादि स्वयंमिथ्या मिथ्योपादानमात्मसम्बन्धि च तदज्ञानमिति मिथ्याध्यास एव तथाविधाज्ञानोपादानं कारणमन्तरेणानुपपद्यमानस्तत्कल्पयतीत्युक्तम् ।

ननु येन तस्यातिशय उत्पद्यते स तस्य विषयः । नचाज्ञानेनात्मन्यावरणातिशयजन्म प्रमाणाभावादर्थानुपपत्तेश्च । न तावदवगते नीलार्थे तत्रावरणकृत्यमवगन्तुं शक्यते अनवगते तु † नतराम् । नन्ववगते सति पूर्वमा ‡ वृतमित्यवगम्यताम् । न । धारावाहिकविज्ञानगम्येऽर्थे पूर्वमवगतस्यापि पश्चादवगमदर्शनात् । नन्विदानीमेवावगतत्वं पूर्वमनवगतिं साधयति । न । पूर्वानवगतिमविज्ञायेदानीमेवावगतमित्यवधारणायोगात् । ननु पूर्वापरप्रत्यभिज्ञायां मध्ये ऽनवगतिरवगम्यत इति । न प्रत्यभिज्ञानुपपत्तिर्मध्ये ऽनवगतिं साधयति । धारावाहिकेप्यात्मनि सदावगते

---

* निर्वोढृत्वमाहेति प्रथमपुस्तके ऽस्ति, निर्वोढृत्वमाहेति २ पु॰ तल्लेखकाज्ञानजन्यम् ।

† न सुतरामिति १,३ पु॰ । ‡ आवृत्तमिति १ पु॰ द्वयेऽपि ।

तद्दर्शनात् । मध्ये ज्ञानस्मृत्यभावादनवगतिरवगम्यते इति चेन्न । अवगतेपि स्मृतिनियमाभावात् । तथापि विषयानवगतिः प्रतीयत इति चेत्सत्यं विषयैः सह साक्षिचैतन्ये अज्ञानाध्यासात्प्रतिभासः । नचाध्यस्तस्यावरणमस्ति द्विचद्रादिवत्प्रमाणगम्यत्वाभावात् । तस्मान्नास्त्यनात्मन्यावरणे प्रमाणम् । नच स्वयमेव प्रकाशहीनस्य जडस्यावरणार्थोपि सम्भवति । तस्मादतिशयाभावान्नाज्ञान-

२४ विषयो ऽनात्मेति । तत्राह सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति । किंत्वन्यदेवानात्मन्यतिशयकार्यं कृत्वा तद्विषयमज्ञानमिति वक्ष्यत इत्यभिप्रायः । तत्र हेतुः प्रमाणवैकल्यादेवेति । अथवा चैतन्यप्रकाशेन जडानां नित्यवदन्वयान्नित्यवत्प्रकाशे प्राप्ते सम्भवत्येवानात्मस्वावरणकृत्यमित्याशङ्क्याह प्रमाणवैकल्यादेवेति । अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धेर्न विषये पृथगावरणं कल्पनीयमित्यर्थः । इतश्च ना ऽनात्मन्यावरणमित्याह रजतप्रतिभासादिति । यद्यात्माश्रयमज्ञानमनात्मावरणं स्यात्तदावरणविनाशमन्तरेण विषयावभासायोगाद्विषयज्ञानेनात्मज्ञानं निवर्त्तेत । अतः सत्यामेवात्मन्य ऽविद्यायां त्रिष्वपि कालेषु विषयस्वरूपप्रतिभासदर्शनान्ना ऽनात्मावरणमज्ञानमिति भावः ।

ननु शुक्तिकाविषयमज्ञानमन्यदेव तज्ज्ञानात्तन्निवर्त्तते ऽन्यत्त्वात्मविषयमज्ञानमात्मनि दृश्यमानमिति । तन्न । आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावाद्विषयाग्रहणस्य प्रमाणवैकल्यादप्युपपत्तेः । * किञ्च तर्ह्यतिशयमज्ञानजन्यमाश्रित्य बाह्याध्यात्मिकेषु

१ वस्तुष्वित्यनात्मविषयमज्ञानं दर्शितमिति तदाह अतस्तत्र रूपान्तरावभासहेतुरेव † केवलम् । नन्वत्राप्यनुपपत्तिः समाना । कथम् । शुक्तिकाज्ञानं हि रूपान्तरावभासं निवर्त्तयत्तदुपादानमज्ञानमपि निवर्त्तयतीति ते मतम् । तत्र कथं शुक्तिकाज्ञानात्सहाज्ञानेनाध्यासे निवर्त्यमाने पुनरात्मन्यज्ञानं दृश्येत । अतः प्रतिविषयमज्ञानभेदो ऽध्यासस्याज्ञानानुपादानत्वं वोपादाननिवृत्तिमन्तरेण ‡ ध्यासनिवर्तिर्वा समाश्रयणीयेति । उच्यते । अस्मिन्पक्षे शुक्तिकादिज्ञाने रजताद्यध्यासानां स्वकारणे प्रविलयमात्रं § क्रियते ‖ मुसलप्रहारेणेव घटस्य ।

---

* किञ्चेति १, २ पु॰ । † हेतुरेवेतीति ३ पु॰ केवलमिति तु नास्ति । ‡ निवर्त्यन्त इति २, ३ पु॰ । § उपादेयनिवृत्तिर्वेति अधिकं ३ पु॰ । ‖ मुशलेति १ पु॰ । मुषलेति ३ पु॰ ।

अथवा । मूलाज्ञानस्यैवावस्थाभेदाः रजताद्युपादानानि शुक्तिकादिज्ञानैस्सहाध्यासेन निवर्तन्त इति कल्प्यताम् । कथं पुनर्लोके सहाज्ञानेनाध्यासस्य तत्त्वज्ञानान्निवृत्तेरप्रतिपत्तौ ब्रह्मज्ञानात्सहाज्ञानेनाध्यासस्य निवृत्तिर्दृष्टद्वारेण कल्प्यत इति । नैष दोषः । तत्त्वावभासविरोधिनो ऽग्रहणमिथ्याज्ञानादेस्तत्त्वज्ञानेन निवृत्तिदर्शनादिहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादेः कल्प्यमानत्वात्तस्य ब्रह्मज्ञानान्निवृत्तेरुपपत्तेः । नचावरणपत्तौक्तदोषप्रसङ्गः । विषयव्यावृत्तरूपान्तरस्य भ्रान्तिज्ञानेनावगमात् । नन्वेवमात्मन्यपि अज्ञाननिमित्तमावरणकृत्यं नास्ति । कथम् । न तावदावरणं प्रकाशविलोपः स्वरूपस्यानपायात् । नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः । ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीत्योरभावात् । तस्मान्नैवात्मन्यपि भावरूपमज्ञानमनुपयोगादिति तत्राह प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयंप्रकाशमान इत्यादिना तस्यानवभास इत्यन्तेन ग्रन्थेन । अयमर्थः । अस्ति प्रकाशत इत्याद्यभिज्ञादिव्यवहारपुष्कलकारणे सति नास्ति न प्रकाशते चेति योयमात्मतत्त्वालम्बनो व्यवहारः * स भावरूपेण केन चिदात्मन्यावरणमन्तरेण नोपपद्यते सति पुष्कलकारणे ऽसति चावरणे सन्निहिते घटे प्रकाशत इत्यादिव्यवहारदर्शनात् । अतो नास्ति ब्रह्म न प्रकाशते चेति व्यवहारो ऽन्यथानुपपत्त्या भावरूपमज्ञानं गमयतीत्यर्थापत्तिरनुमानं वा समुदायार्थः । तत्सिद्ध्यर्थमात्मनि प्रकाशत इत्यादिव्यवहारं प्रति पुष्कलकारणतां दर्शयति चितिस्वभावत्वादिति । किं तह्यावरणमिति तत्राह ब्रह्मस्वरूपानवभासस्येति । नास्ति न प्रकाशत इति व्यवहारालम्बनयोग्यत्वस्य व्यवहारकार्यदर्शनादेव कल्प्यमानस्येत्यर्थः । नचाधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्यमुपपद्यते ऽविद्यासम्बन्धादेवावरणस्यानिरूपिताकारता च युक्तेति भावः । ननु प्रमाणवैकल्यादेवाचाप्यग्रहणमिति । नेत्याह अनन्यनिमित्तत्वादिति । अतो ऽनवभासात्पुष्कलकारणे सति परिशेषादिदमायातमित्याह तद्गतनैसर्गिकसिद्धाऽविद्याशक्तिप्रतिबन्धादेव तस्यानवभास इति । मूर्तद्रव्यान्तरस्यासम्भवादिति भावः । अतः कार्यदर्शनान्नेयमावरण-

५ २

,, ३

---

* स्वभावरूपेणेति १ पु० ।

कृत्यं विपर्ययं चात्मनि कुर्वाणमज्ञानं भावरूपमेवोभयकारणत्वान्यथानुपपत्त्या
४ कल्प्यत इत्याह । अतः सा प्रत्यक्चितीति ।

नन्वग्रहणमिथ्याज्ञानतत्संस्कारेभ्यो ऽन्यदज्ञानं नाम न पश्यामः । त एव च जीवस्य स्वयंप्रकाशमानमपि ब्रह्मस्वरूपावभासं प्रतिबध्नन्तीति ।
५ नेत्याह सुषुप्तादौ चेति । तचाप्यविद्याशक्तिः संस्कारशेषं तिष्ठति न संस्कारादय एवाज्ञानमित्यर्थः । कथम् । न तावत्सुषुप्तादौ स्वयम्प्रकाशब्रह्मस्वरूपानवभासः पुरुषान्तरसंवेदनवद् द्रष्टुर्भिन्नत्वादिति शक्यं वक्तुम् एकत्वश्रुतेः । नापि मिथ्याज्ञानप्रतिबन्धात् तत्र तस्याभावात् । नापि तत्संस्कारप्रतिबन्धाद्भ्रान्तिः संस्काराणां तत्त्वावभासप्रतिबन्धकत्वाभावात् सत्स्वपि रजतभ्रमसंस्कारेषु शुक्तिकावबोधदर्शनान्नाप्यग्रहणप्रतिबन्धात् । स्वरूपग्रहणस्य नित्यत्वात्स्वयंप्रकाशमाने संवेदने तद्विषयकादाचित्काग्रहणस्याप्रतिबन्धकत्वात् । नापि कर्म्मणा स्वरूपावभासविरोधिता सर्वदाऽणुमात्रस्यापि चैतन्यस्यानवभासप्रसङ्गात् । अज्ञानेपि तुल्यमिति चेन्न । तस्य स्वविषयचैतन्यावभासं प्रत्यप्रतिबन्धकत्वात् । नचाज्ञानस्येव कर्म्मणां नित्यवत्साक्षिचैतन्येनावभास्यता येन तदवभासकतया साक्षिचैतन्यमप्रतिबद्धुं प्रकाशेत । नच कर्म्माणि स्वाश्रयावभासविरोधीनीति प्रमाणमस्ति । संस्कारत्वाच्च कर्म्मणां भ्रान्तिसंस्कारवदप्रतिबन्धकता । तस्मात्सुषुप्तादौ स्वरूपानवभासव्यवहारो ऽग्रहणमिथ्याज्ञानतत्संस्कारकर्म्मभ्यो ऽन्यदेव किंचित्प्रतिबन्धकमज्ञानं कल्पयतीत्यर्थः । ननु द्रव्यान्तरमेव प्रतिबन्धकं कल्प्यतां किमज्ञानकल्पनयेति नैतत् । ब्रह्मज्ञानात्प्रतिबन्धनिवृत्तिमन्तरेण स्वविषयावभासायोगात् ज्ञाननिवर्त्यस्य चाज्ञानत्वात् ।

अत्र कश्चिद्भेदाभेदाभ्यां सर्वसंकरवादी वेदान्तार्थगहनसम्प्रदायहीनो दुर्ज्जनरमणीयां वाचं जल्पति । न किलाग्रहणमिथ्याज्ञानतत्संस्कारेभ्यो ऽन्यत् सकलसंसारबीजभूतमवस्थात्रयेप्यनपाय्याऽऽसंसारविमोक्षाद्व्रुवडायमानमज्ञानं नामास्ति किंतु भ्रान्तिज्ञानमग्रहणं चाज्ञानमिति । अयं प्रष्टव्यः केयं भ्रान्तिरिति । अहंकारादिशरीरपर्यन्ते ऽनात्मनि आत्मबुद्धिरिति चेत् । अहो विस्मरणशीलता सर्वत्रसङ्कीर्णचेतसः । खण्डो गौरित्यादिभेदाभेदप्रत्ययं प्रमाणमुपपयादयन्नाहं मनुष्य इतिप्रत्ययं भेदाभेदविषयं

किमित्युपेक्षसे । नाहं मनुष्यो ब्रह्मास्मीतिप्रत्ययसामर्थ्यादिति चेत् । तन्न । नायं खण्डो गौः किं तु मुण्डो गौरितिप्रत्ययेपि खण्डमुण्डाभ्यां गोत्वस्याऽभेदवत् शरीरब्रह्मभ्यां जीवस्याभेदप्रत्ययस्यापि प्रामाण्योपपत्तेः । इदंरजतवद् भ्रान्तिरिति चेत् न । खण्डो गौरित्यत्रापि तथात्वप्रसङ्गात् । नायं खण्डो गौः किंतु मुण्ड इति व्यक्त्यन्तरे खण्डस्य गोत्वोपाधौ निषेधप्रत्ययसामर्थ्यात्तत्र व्यवहारानुच्छेदात् प्रामाण्यमिति चेत् । तदहं मनुष्य इत्यत्रापि तुल्यम् मोक्षावस्थायामपि सर्वात्मत्वात्तत्र सर्वशरीरेन्द्रियाद्यभिमानव्यवहारानुच्छेदात् । जातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिसबन्धा यत्र विद्यन्ते तत्र भेदाभेदौ न शरीरात्मनोस्तेषामभावादिति चेत् तर्हि * शरीरशरीरिसम्बन्धोपि गुणगुण्यादिवद्भेदाभेदनिमित्तं किं † न स्यात् अन्यथा सर्वसङ्करवादितया ‡ क्षपणकशिष्यता चिरकालसमुपार्जिता बाध्येत । अस्ति च चेतनस्वरूपशरीरयोः कार्यकारणभावश्चेतनस्वरूपांशस्य ब्रह्मत्वात् अतो न ते भ्रान्तिरस्ति ।

किंच । भ्रान्तिज्ञानमन्तःकरणपरिणामश्चेतदात्माश्रयाऽविद्या न स्यात् । अन्तःकरणपरिणाम एवात्मनि अध्यस्त इति चेत्तथाप्यन्यथाख्यातिवादिनः संसर्गस्य शून्यत्वादात्माविद्यासम्बन्धो न स्यात् । न चात्मपरिणामो भ्रान्तिः अपरिणामित्वात् । न चाऽज्ञानगुणस्य द्रव्यस्य पुनर्ज्ञानगुणान्तराकारेण परिणामः सम्भवति अवान्तरजातीयस्यैकस्मिन् द्रव्ये गुणद्वयस्य युगपत्समवायायोगात् । नहि पटे शौक्ल्यं युगपत्समवैति । तस्मादनादिसि § द्धमिथ्याज्ञानानभ्युपगमे न कचित्सर्वसङ्करवादिनो ऽविद्यासम्भवति अनादिमिथ्याज्ञानसम्बन्धोऽप्यात्मनि अज्ञानवत्काल्पनिकत्वादाकाशकार्ण्यवदात्मनः कूटस्थतां न विहन्तीत्यलमतिविस्तरेण । अत्र च प्रत्यक्षानुमानार्थापत्तयो ऽनादिभावरूपाज्ञाने प्रमाणत्वेनोपन्यस्ताः । तच्चैवंभूतेन कारणरूपेण कार्यरूपेण च नैमित्तिकत्वनैसर्गिकत्वे न विरुद्धे इत्युपसंहरति । अतो नैसर्गिकोप्यहङ्कार इति अन्योन्यधर्म्मांश्चेत्यादिरध्यासस्वरूपं दर्शयतीत्यन्तो ग्रन्थः स्पष्टार्थः । ५ ६

निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसे ऽज्ञानादिसाक्षिण्यनादिसिद्धेप्यज्ञानाध्यासे कादाचित्कमध्यासमाश्रित्याह अहमिति तावत्प्रथमोध्यास इति । ,, १२

---

* शरीरिसम्बन्धोऽपीति ३ पु° ।
† किंनेति २, ३ पु° नास्ति ।
‡ क्षपणकेति २ पु° ।
§ सिद्धेति २ पु° नास्ति ।

नन्विदं रजतमितिवदध्यासे द्वैरूप्यमहमित्यत्रापि वक्तव्यम् अहमिति चैकरूपे-
३ णावभासते अतो नाध्यास इति चोदयति नन्वहमिति निरंशचैतन्यमात्रमिति।
यथा द्वैरूप्येणाध्याससम्भवस्तथा वक्ष्यत इत्याह यथाध्यस्तांशान्तर्भाव इति।
नन्वन्तःकरणेन्द्रियाणामात्मनः पृथक्सत्त्वोपलब्ध्यभावादध्यस्ततयैव सिद्धेरा-
त्मतत्त्वावबोधेन च स्वरूपतो विलयश्रवणात्स्वरूपेण संसृष्टरूपेण चात्मन्य-
ध्यस्ततया सिद्धिरस्तु शरीरं पुनरिन्द्रियैरिदंबुद्धिगृहीतत्वात्केवलसाक्षिवेद्यत्वा-
भावादुत्क्रान्तेप्यात्मनि पृथगुपलब्धेर्भूतेषु लयश्रवणाच्च नाध्यस्ततया सिद्धमिति
चोदयति नन्विदमित्यहंकर्त्तुरिति। शरीरव्यतिरिक्तं ममबुद्धिगृहीतं सुतरामन-
ध्यस्तमित्याह ममेदमिति चेति। शरीरादिपदार्थस्वरूपस्य मिथ्याकल्पितकर्तृ-
भोक्तृप्रमातृदोषसंयुक्तात्मार्थतयैव कार्यतया भोग्यतया प्रमेयतया दृश्यतया च
तादर्थ्येनैव सृष्टत्वात्स्वरूपेणापि मिथ्यात्वं स्वप्नदृष्टान्तेनानुमातुं शक्यत
इत्याह उच्यते यदैवाहंकर्त्तेत्यादिना। दार्ष्टान्तिकं दर्शयति। एवमहंकर्तृत्व-
प्रमुख इति।

द्रष्टरि दृश्यावभासस्याविद्याध्यासत्वे शास्त्रीयविषयप्रयोजनसिद्धिः
फलिष्यतीत्याह अतस्तादृग्ब्रह्मात्मानुभवपर्यन्तादिति। तादृग्ब्रह्मात्मानु-
भवो बन्धनिवृत्तिश्चोपपद्यत इत्यर्थः। विषयप्रयोजनसिद्धौ किमायातमिति
शास्त्रारम्भकर्त्तव्यता सिद्धेत्याह तदर्थविषयवेदान्तमीमांसारम्भ इति। ते
एव ब्रह्मात्मानुभवबन्धनिवृत्ती अर्थः प्रयोजनं विषयश्च यस्य वेदान्तमीमांसा-
रम्भस्येति विग्रहः। सर्वलोकप्रत्यक्ष इत्यन्तस्योत्तरभाष्यस्य तात्पर्यमाह।
आह कोयमिति। इदानीं विभज्यावान्तरतात्पर्यं कथयति तत्रापीति।

१ लक्षणसम्भावना* परभाष्यमाक्षिपति। यद्येवमिति। किमिति लक्षण-
सम्भावने नापेक्ष्येते† इति तत्राह नह्यनिर्ज्ञातरूपमिति। प्रमाणमेवहि प्रमेयम-
न्यस्यान्यात्मनावभासमध्यासं व्यवस्थापयत् स्वदेशकालोपाधौ सम्भावितरूपं
सर्वतोव्यावृत्तासाधारणरूपञ्च व्यवस्थापयति किं पृथग्लक्षणसम्भावनोपन्यासेने-
त्यर्थः। नन्वनुमानादिप्रमाणनिर्ज्ञातेषु वस्तुमात्रेषु विशेषलक्षणसम्भावने पृथग-
३ पेक्ष्येते इत्यत आह दुःसंपादमिति। विशेषत‡ इत्यसाधारणाकारेण व्यावृत्त-

---

* परमिति २ पु०।  † नापेक्ष्यते-इति १ पु०।
‡ असाधारणाकारव्यावृत्ततयेति १ पु०।

तयेत्यर्थः । तत्र द्रष्टुरन्यस्य दृश्येनान्यात्मनावभासो विद्यत इत्येतावति प्रमाणं वक्ष्यते न तस्याविद्याभ्रान्त्यध्यासमिथ्यात्वे अतस्तत्प्रमाणेन न सिध्यतीति परिहरति उच्यते न देहेन्द्रियादिष्वित्यादिना । ६ ३

* नन्वन्यस्यान्यात्मनावभासप्रमाणेनैव तन्मिथ्यात्वमपि सिध्यति प्रमेयैक्यादिति चोदयति तत्कस्य हेतोरिति । नानुभवादेवेति परिहरति लोक इति । ननु प्रमाणे सति किमित्यनुभवाभावः प्रमाणभेदादित्याह बाधे सतीति । बाधानुपपत्तिर्मिथ्यात्वे प्रमाणं प्रत्यक्षानुमानव्यवहारानुपपत्त्यागमा आत्मन्यनात्मावभासे प्रमाणमिति भावः । नन्विहापि बाधनिमित्तमितरेतरविवेकमन्तरेणान्यस्यान्यात्मतावभासोऽयमित्यवगन्तुं न शक्यते अन्यथा स्वस्यैव स्वेनात्मनावभासः किं न स्यादिति नेत्याह नेह स विद्यत इति । यौक्तिकज्ञानादिना परोक्षविवेकमाश्रित्य परस्परात्मतावभासनिश्चयेऽप्यपरोक्षबाधस्य भ्रान्तिप्रतिभासोच्छेदिनोऽभावान्न स्पष्टो मिथ्यात्वाध्यवसाय इति भावः । अतोऽविद्यात्वस्पष्टीकरणाय लक्षणमेव वक्तव्यमित्याह तस्मादध्यासस्येति । तर्हि लक्षणप्रमाणाभ्यामेव वस्तुनिर्णयसिद्धेः प्रमाणेनैवासम्भावनानिराकरणात्सम्भावना पृथङ्न वक्तव्येति चोदयति नन्वेवमपीति । सत्यपि प्रमाणसामर्थ्ये प्रत्यक्षावभासमपि असम्भाव्यमानतया निराकृतमनुभूयत इत्यनुभवमेवावलम्ब्य परिहरति सत्यमेवमिति । औत्पातिक इति अदृष्टव्यतिरिक्तकारणशून्य इत्यर्थः ।

ननु प्रमाणेनैव क्वचिदसम्भावना तिरस्क्रियते यथाकाशगमने पक्षिणां क्वचिदसम्भावनया प्रतिभासोऽपरोक्षोऽपि निरस्यते यथा सवितृशुष्यादौ तत्रात्मन्यात्मावभासः कं पक्षमवलम्बतामित्यसम्भावनापक्षमेवेति विशेषं दर्शयति एवमविषयेऽसङ्ग इति । अधिष्ठानस्याध्यस्यमानेन सहैकज्ञानविषयत्वं वक्तव्यम् तदभावान्नाध्याससम्भव इत्याह अविषय इति । द्रष्टुर्व्यतिरिक्तस्य कृत्स्नस्य कार्यकारणसंघातस्याध्यासात्मकत्वेन द्रष्टर्य्येव काचादिवद्दोषानुषङ्गो वक्तव्यः तदभावान्नाध्याससम्भव इत्याह †असङ्ग ,, १४ इति । अधिष्ठानस्याध्यस्यमानेन गुणावयवसादृश्यं वक्तव्यम् तदभावान्ना-

---

* नन्वन्यस्यात्मतावभासेति २ पु० । † असङ्गत इति १ पु० ।

[१४] ध्याससम्भव इत्याह केनचिदपि गुणादिनेति । अधिष्ठानयाथात्म्याव-भासो ऽध्यासविरोधी तद्भावाच्च ना * ध्याससम्भव इत्याह निष्कलङ्कचैतन्य-तयेति ।

नन्वात्मन्यविषयादिरूपे ऽनवगते नासम्भावनाबुद्धिः अवगते तु नाध्यास एव तिष्ठति कुतो ऽसम्भवनाबुद्धिरिति । नैतत्सारम् । आत्मन्य-विषयादिरूपे परोक्षावभासो ऽसम्भावनाबुद्धिहेतुः अपरोक्षावभासोध्यासस्य निवर्त्तक इत्युक्तत्वात् । उपसंहरति तस्मा शङ्कीति । तदुच्यते । तत् त्रितयं लक्षणं सम्भावना प्रमाणं क्रमेणोच्यत इत्यर्थः । अनन्तरभाष्यस्य तात्पर्यमाह आह कोयमिति । तन्त्रेणेति । युगपदर्थद्वयविवक्षयेत्यर्थः । उभयस्य चेह सम्भवादिति । लक्षणप्रश्नस्य सम्भावनाक्षेपस्य च स † म्भवादित्यर्थः । उभय-मप्येव विवक्षितं चेत्सम्भावनैव प्रथमं किन्न प्रदर्श्यत इत्यथाह तथापीति । स्वरूपमाख्यायेति प्राथम्ये हेतुः ।

नन्वाहेति परोक्तिकथनं किमर्थमिति । अर्थनिर्णयप्रधानत्वाद्वादकथा-शास्त्रम् तथ प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इति । वादिप्रतिवादिभ्यां गुरुशिष्याभ्यां वा पक्ष-प्रतिपक्षपरिग्रहेण क्रियमाणार्थनिर्णयावसाना वादकथाच प्रवृत्तेति दर्शयितुं परोक्तिकथनमित्याह तथैवम्भूते विषय इत्यादिना । तेनाक्षिप्रमाक्षेपरूप-मप्यभिप्रायमनेन पृष्टमेवेति मत्वा प्रत्युक्तं पुनरसावाक्षेपरूपेण विवृणोती-त्याक्षेपमवतार्येति व्याख्येयम् । ननु शास्त्रेषु जल्पवितण्डाभिप्रायेणापि परोक्तिरस्तीति नेत्याह सर्वथैवंविध इति ।

ननु लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात्साकाङ्क्षं वचनमन-र्थकमित्याशङ्क्य वाक्यं पूरयति प्रश्नवाक्यस्थितमिति । ननु परस्य परात्मना ऽवभासोध्यास इति वक्ष्यति तथ कथमेकेनैव परशब्देन लक्षणं पूर्यत इत्य-थाह तथ परत्येत्युक्त इति । उत्तरो ग्रन्थः स्पष्टार्थः । ननु घञादीनां भावे [२६] विधानात्कथं कर्मपरतया स्मृतिशब्दो व्युत्पाद्यत इति ‡ तथाह असंज्ञायाम-

---

* संभवशब्दो नास्ति ३ पु० । † सम्भावादिति १ पु० ।

‡ तत्राह सञ्ज्ञायामपीति । कर्तृव्यतिरिक्तकारकेषु संज्ञायामपि प्रयोगो भवतीति १ पु० शोधनेन पश्चात्कल्पितम् ।

पीति । कर्तृव्यतिरिक्तकारकेषु * संज्ञायामिवाऽसञ्ज्ञायामपि प्रयोगो भवत्यकर्तरि च कारके संज्ञायामितिसूत्रादित्यर्थः ।

ननु स्मर्यते चेद्रूपशब्दः कि † मर्थमस्मर्यमाणे वस्तुन्युपमासमासार्थ इत्याह स्मर्यमाणरूपमिवेति । ननु किमुपमासमासेन स्मर्यत एवेदं रजतमिति नेत्याह न पुनः स्मर्यत एवेति । ननु चक्षुरादिप्रमाणाभावात्परिशेषात्स्मृतिरिति नेत्याह स्पष्टं पुरोवस्थितत्वावभासनादिति । यथान्यत्रेदं रजतमऽयं घट इत्यादावितरेतरसंसृष्टौ सामान्यविशेषावपरोक्षाववभासेते तथेहापि प्रतिभासः । नहि परमार्थेदंरजतसंवेदनाकारावभासन्यूनतामन्तरेण संसर्गसंविदंशाभावः शक्यते वक्तुम् ।

अर्थाभावे कथमपरोक्षा संविदिति चेत् न । यथासंविदवभासाधीनत्वादर्थसत्तानिश्चयस्य । नह्यर्थसत्तानिश्चयाधीनः संवित्सत्तानिश्चयः अर्थसत्तानिश्चयस्यापि निश्चयान्तराधीनत्वप्रसङ्गात् । ननु नेदं रजतमित्युत्तरसंवेदनादर्थाभावोपि निश्चितः । न । तत्रापि पूर्वसंवेदनेन सद्भावविषयेण विरोधात् । इदंरजताभावसंवेदनानामविवेककल्पनयोत्तरज्ञानेपिसंसर्ग ‡ संविदभावः किं न स्यात् व्यवहारसंवादज्ञानादुत्तरज्ञाने संसर्गसंवित्सद्भावश्चेत् न अर्थक्रियासंवादज्ञानादर्थसंवित्सद्भावनिश्चय इति वदतः संवित्प्रत्यक्षत्व § वादहानात् । अर्थक्रियासंविदोपि संविदन्तराधीनसद्भावनिश्चयप्रसङ्गात् ।

ननु सम्प्रतिपन्नोर्थाभावः । न । यथाप्रतिभासमेव मिथ्यारजतस्योत्तरज्ञानेन निरसनयोग्यस्योपगमात् लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वाद्रजते त्रैकाल्याभावज्ञानस्येति संविद्द्वयानुरोधेन व्यवस्थासिद्धेरन्यतरसंविदपह्नवायोगात् तथाचोभयसंविद्विषयानुभवो नास्त्यत्र रजतं मिथ्यैव रजतमभादिति । नन्वपरोक्षशुक्तिकाज्ञानाविवेकाद्रजतमपरोक्षतया प्रतिभासत इति नेत्याह स्पष्टमिति । केयं स्पष्टता नाम । विवेकज्ञानसमयेप्येतावन्तं कालमिदं रजतमिति अभादिति संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यता । अन्यथा तद्रजतमेतावन्तं कालमितो ऽविविक्तमिति प्रतीयात् अथ वा तज्ज्ञानात्तत्र प्रवृत्ति-

* सञ्ज्ञायामिवासञ्ज्ञायामपीति ३ पुस्तके शोधनेन कृतम् ।

† किमर्थ इत्यस्मर्यमाणे-इति २ पु० ।

‡ सम्भेदनाभाव इति २ पु० । § स्वप्रत्ययोनास्ति २ पु० ।

रिति पदार्थांशज्ञानतत्प्रवृत्त्योर्नियमात् इहापिसंसर्गप्रवृत्तिनिमित्ततासंसर्गज्ञानस्य स्पष्टतेति पूर्वदृष्टावभास इति स्पष्टार्थः ।

यदा ज्ञानविशिष्टोर्थ एवाध्यासस्तदा स्मर्यमाणसदृशोन्यात्मनावभास्यमानो ऽन्यो ऽर्थो ऽध्यास इत्येवंलक्षणपरतया वाक्यं योजितम् । यदा पुनरर्थविशिष्टं ज्ञानमेवाध्यासः तदा स्मृतिसमानोन्यस्यान्यात्मनावभासोध्यास इत्येवंलक्षणपरतयापि तदेव वाक्यं योजयितुं शक्यत इत्याह यतोर्थादिति । अर्थाद्वाक्यसामर्थ्यादित्यर्थः । कथमित्यादिः स्पष्टार्थः । ननु न स्मृतिश्चेद् भ्रान्तिः प्रत्यक्षज्ञानवत् न पूर्वानुभवजन्यत्वमित्याशङ्क्य सम्प्रयोगमात्रजन्यज्ञानादन्येषां सर्वेषामविशिष्टं पूर्वप्रमाणजन्यत्वमन्वयव्यतिरेकसामर्थ्यादित्याह नह्यसम्प्रयुक्तावभासिन इति ।

ननु संस्कारजन्यत्वमुपगतं चेदन्यसम्प्रयुक्ते चक्षुषि यदनन्तरमन्यविषयं ज्ञानमुत्पद्यते सा स्मृतिरेव तद्व्यवधानेन तु यज्ज्ञानमुत्पद्यते तदनुमानादि प्रमाणमिति प्रमाणस्मृतिद्वैराश्यमेव विज्ञानस्य न तृतीयं मिथ्याज्ञानं नामास्तीति अख्यातिवादी प्रत्यवतिष्ठत * इत्याह † अपर आहेत्यादिना । ननु स्मृतिश्चेद्वदादिस्मृतिवत्स्वार्थं गृह्यमाणाद्विविच्य स्मरामीति दर्शयेदित्यत आह प्रमोषस्त्विति । ननु शुक्तिकासम्प्रयोगे सादृश्याद्रजतं किमिति स्मर्यते अतिसादृश्याच्छुक्तिकान्तरमेव स्मर्यतामिति नेत्याह इन्द्रियादीनामिति । ननु मा भूत् स्मृतेः प्रमोषात्स्वार्थविवेकता ग्रहणं तु स्वार्थं स्मर्यमाणाद्विवेचयेदिति नेत्याह सम्प्रयुक्तस्य चेति । ननु स्मृतिग्रहणयोर्यौगपद्याभावात्क्रमवर्तित्वे पूर्वज्ञानं व्यवधानान्न प्रवृत्तिहेतुः । नच सामान्यमात्रज्ञानाद्विशेषमात्रज्ञानाद्वा प्रवृत्तिरित्यत आह तेन दर्शनस्मरणयोर्निरन्तरोत्पन्नयोरिति । निरन्तरोत्पत्तिरेव प्रवृत्तिहेतुरित्यर्थः । नन्विदं रजतमित्यभादिति संसर्गप्रत्ययः प्रत्यभिज्ञायत इति नेत्याह अनुत्पन्न एवैकत्वावभास इति ।

जन्मान्तरानुभूतं न स्मर्यत इतिभाष्यवचनादस्मर्यमाणत्वाच्च बालस्य तिक्तस्मृतिः कथमिति चोदयति नन्वनास्वादिततिक्तरसस्येति । ‡ जन्मान्त-

* इत्याहेत्येतावन्मात्रं नास्ति २,३ पु· । † अपरमाहेत्यादिनेतीति ३ पु· ।
‡ जन्मान्तरानुभूतं-इति २ पु· ।

रानुभूततिक्तस्मृतिः कल्प्यत इत्याह उच्यत इति । जन्मान्तरानुभवस्योप- १ १५
कारितामाह अन्यथा *ननुभूतत्व एवेति । किमिति तर्हि जन्मातरानुभूतं
किञ्चिदेव स्मर्यते न सर्वमिति दोषबलादित्याह तस्मात् पित्तमेवेति ।
किमिति तर्हि दोष एव जन्मान्तरानुभूतं सर्वं न स्मारयतीत्यत आह कार्य-
गम्यत्वादिति । नन्वतत्त्वे तत्त्वज्ञानमिति शास्त्रकारेणैव दर्शितः संसर्गभ्रम
इति नेत्याह एतेनान्यसम्प्रयोग इति । वक्तव्ये च पूर्ववादिनाप्यविवेके संस- ,, १८
र्गज्ञानकल्पनागौरवादऽख्यातिरेव युक्तेति भावः ।

उच्यते । केयमख्यातिरिति । न तावत् ख्यात्यभावमात्रं अनभ्युप-
गमादतिप्रसङ्गाच्च । अन्यार्थिनो ऽन्यत्र प्रवृत्तिहेतुर्ज्ञानमिति चेत् । यत्र तर्हि
न प्रवृत्तिर्झटिति बाधश्च तत्र कथं भ्रान्तिः । अथाविविक्तानेकपदार्थज्ञानम्
तर्हीदमिति रजतमिति चापुनरुक्तशब्दद्वयस्मृतिहेतुतया विविक्तावभासनान्न
तस्य सामान्यविशेषयोरविवेकभ्रमः सम्भवति । नच भेदावमर्शेनैकत्वज्ञान-
मनभ्युपगच्छतः सामान्यविशेषयोरविवेकः सम्भवति विविक्ताकारद्वयावभास-
नात् । इतरेतराभावभेदद्वित्वादिसङ्ख्याविशिष्टज्ञानं विवेक इति चेत् गामानय
दण्डेनेति गोदण्डयोस्तत्कारकत्वयोश्चाविवेकभ्रमः स्यात् । तत्राप्यानुषङ्गिक-
भेदादिज्ञानमस्तीति चेत् इदमिति रजतमिति चेहाप्यपुनरुक्तशब्दानुषक्ता-
कारद्वयावभासे द्वित्वाद्यवभासो विद्यत एव अन्यथा सामान्याकाराद्विशेषा-
कारस्य विवेकानवभासादिदमित्येव स्यात् †रजतमित्येव स्यात् नेदं रजत-
मिति । किञ्च । प्रतीयमानाकारयोर्नाविवेको ऽपुनरुक्तप्रतिभासादप्रतीयमाना-
काराविवेको न भ्रमो ऽतिप्रसङ्गात् । तस्मान्नाविवेको भ्रमः ।

किञ्च । खण्डो गौरित्यादिप्रत्ययाश्चाविविक्तानेकपदार्थविषया विभ्रमाः
प्रसज्येरन् । नच ग्रहणस्मरणाविवेक एव भ्रमः अहं मनुष्य इति गृह्यमाणा-
विवेकस्य भ्रमत्वात् । सामान्यविशेषादौ ससर्गज्ञानमेवास्तीति चेत् । तथाप्य-
विविक्तानेकपदार्थज्ञानाद् भ्रमत्वमपि स्यात् । नच तत्र संसर्गप्रत्ययेपि
ऐक्यस्य तदालम्बनस्याभावात् । गुणगुण्यादिसम्बन्ध एवालम्बनमिति चेत्
न । प्रत्यभिज्ञाया ऐक्यालम्बनत्वात् । इहापि सादृश्यसम्बन्ध एवेदं रजत-

---

* अननुभूतत्वेति-इति २ पु० । † रजतमिति वास्यादिति २, ३ पु० ।

मितिसंसर्गप्रत्ययालम्बनं स्यात् । अस्ति च सामान्यविशेषादीनामिदंरजतयोरिव विवेकप्रत्ययो घटस्य शौक्ल्यमितिविवेकाभ्युपगमात् । किञ्च । ग्रहणमेव स्मर्यमाणात्स्वार्थं किं न विविञ्च्यात् । विशेषदर्शनाभावादिति चेत् । यदि गृहीतमात्रस्य रजताद्भेदोस्ति तदा भेदोपोचितो विशेषो धर्म्याकारः प्रतियोग्याकारो वा नान्य इति गृहीत एव भेदाकारो विविक्तः प्रतीयेत । अथ धर्मिप्रतियोग्याकारे गृहीते ऽपीतरेतरापेक्षया तृतीयमेव ज्ञानं भेदं ग्राहयतीति । तर्हि सर्वपदार्थज्ञानानां भेदग्रहणात्प्रागविवक्तत्वाद् भ्रमत्वप्रसङ्गः । अथ न गृहीतमात्रस्य रजताद्भेदः । तर्ह्यैक्यमेवेति संसर्गज्ञानस्य सालम्बनतासिद्धिः ।

किञ्च । स्मृतिर्वा गवयादिस्मृतिवद्गृह्यमाणात्स्वार्थं किमिति न विविञ्च्यात् । स्मरणाभिमानप्रमोषादिति चेत्तत्राह कोयं स्मरणाभिमान इति । न तावत् स्मृतिरेव । तस्याः प्रमोषे ज्ञानस्यैवाभावप्रसङ्गात् । स्मृतेरन्यश्चेत् कथमन्यस्य प्रमोषे परिपूर्णमुत्पन्नं ज्ञानं स्वकार्यमर्थविवेकं न कुर्यात् । न चान्यः स्मरणाभिमानो दृश्यत इति भावः । ननु पूर्वानुभवतद्देशकालानामन्यतमेन स इत्याकारेण वा स्मर्यमाणस्य सम्भेदः स्मरणाभिमान इति नेत्याह न तावज्ज्ञानानुविद्धतया ग्रहणमिति । सोयमिति प्रत्यभिज्ञाभ्रमे हि सर्वेषामेवैषां स इत्याकारस्य पूर्वानुभवदेशकालानां च स्मरामीतिपर्यन्तानां सम्भेदावगमेपि गृह्यमाणेनाविवेकदर्शनादिति भावः । नच पूर्वानुभवसम्भेदः स्मर्यमाणे सम्भवतीत्याह नह्यतिवृत्तस्येति । अर्थस्मृतिसंस्कारस्य जनकं यत्पूर्वविज्ञानं तत्स्वयंग्राह्यविशेषणतया स्वेनैव न विषयीक्रियते अर्थमात्रविषयत्वात्पूर्वज्ञानस्य । नहि पूर्वज्ञानेनाविषयीकृते विषये तत्संस्कारजन्या स्मृतिः समुत्पद्यते । तस्मादर्थमात्रविषयज्ञानजन्या स्मृतिरर्थमात्रमेव विषयीकरोति न पूर्वज्ञानेनाविषयीकृतं ज्ञानमपि अन्यथा नीलज्ञानात्पीतेपि स्मृतिः स्यात् ।

ननु स्मर्यमाणे पूर्वानुभवसम्भेदः स्वानुभवसिद्धः । सत्यम् । यत्पूर्वानुभवसमये ऽर्थावभासलिङ्गजन्यमर्थज्ञानसद्भावविषयमनुमानज्ञानमुत्पन्नं तदनुमानज्ञानसंस्कार * जनिता स्मृतिः अनुभवसम्भिन्नमर्थं गमयति मूलज्ञानेना-

---

* जनितस्मृतिरिति ३ पु० ।

प्यर्थज्ञानविषयेण विशिष्टार्थविषयीकरणात् । यस्मादर्थस्मृतिसमनन्तरमनुभव-
विशिष्टार्थस्मृत्यन्तरजननादर्थस्मृतिरेवानुभवसम्भिन्नेति विभ्रमः तस्माच्छुद्धमे-
वार्थमित्युपसंहरति शुद्धमिति । पूर्वज्ञानेन यावन्मात्रं वस्तुमात्रं वा ज्ञानसम्भिन्नं १ २१
वा व * स्तु विषयीकृतं तावन्मात्रमेवावभासयति न स्वमूलज्ञानसम्भिन्नमि-
त्यर्थः ।

नन्वर्थस्मृतिर्वा † ज्ञानसम्भिन्नविषयं स्मृत्यन्तरं वेत्यत्र को विवेक
इति तत्रोदाहरणमाह तथाच पदात्पदार्थस्मृताविति । वाक्यार्थप्रत्ययवि- ११ २२
वक्षया यावदन्त्यपदोच्चारणपरिसमाप्तिस्तावत् क्रमेणोच्चार्यमाणेषु पदेष्वेकैकस्मा-
त्पदादेकैकार्थविषयाणि ज्ञानान्युत्पद्यन्ते ताश्च सम्बन्धिशब्ददर्शनात्सम्बन्ध्य-
न्तरार्थविषयाः स्मृतय इत्यभिहितान्वयवादिनामन्विताभिधान ‡ वादिनां च
संमतम् । ननु को ऽसौ § शब्दस्यार्थेन सम्बन्धो यतः शब्दस्य दर्शनादर्थे
स्मृतिरुत्पद्येत । ‖ अर्थबुद्धिजननसामर्थ्यलक्षण इति चेत् । किं स्मृतिजन-
नसामर्थ्यलक्षणो ऽन्यो वा । ¶ नचान्यः । पदानां पदार्थांशेषु स्मृतिव्यतिरि-
क्तकार्यान्तराभावात् । न च स्मृतिजननसामर्थ्यसम्बन्धादेव स्मृतिजन्म अन्यत्र
सादृश्यादिसम्बन्धान्तरे सत्यन्यतर * दर्शने ऽन्यतरस्मिन् स्मृतिदर्शनात् ।
तस्मान्न शब्दादर्थे स्मृतिरिति । † उच्यते । सम्बन्धज्ञानसंस्कारः शब्ददर्श-
नं चात्र स्मृतिहेतुः नार्थेन सम्बन्धविशिष्टशब्दज्ञानम् येन विशिष्टे स्मृतिसा-
मर्थ्यव्यवस्थापनाद्विशेषणीभूतं सम्बन्धान्तरमिष्येत सम्बन्धविशिष्टान्यतर-
दर्शनाच्चान्यतरस्मृतौ सम्बन्धविशेषणत्वेनान्यतरस्यापि स्मृतिविषयस्य प्रागेव
बुद्धता स्यात् । सादृश्यादिमूलसम्बन्धानां बुद्धिसामर्थ्यलक्षणत्वाभावात् ।
सामर्थ्यसम्बन्धादर्थान्तरत्वं न विरुध्यते । बुद्धिसामर्थ्यसम्बन्धाद् बुद्धि-

---

* वस्तुमात्रं चेति ३ पु॰ ।        † ज्ञानसम्भिन्नविषयेति २ पु॰ ।

‡ वादिनामपीति ३ पु॰ ।        § अर्थेन शब्दस्य सम्बन्धइति ३ पु॰ ।

‖ अज्ञातसम्बन्धाच्छब्दात्स्मृत्युत्पत्तावव्युत्पन्नस्यापि ततो ऽर्थस्मरणप्रसङ्गः, शक्तिज्ञानं च स्मृतिरूपकार्यज्ञानाधीनमित्यन्योन्याश्रयः–इति भाव॰ ।

¶ पदस्य स्मारकत्वं भवतां संमतं चेति चशब्दार्थ इति तत्त्व॰ ।

* तरप्रत्ययो नास्ति ३ पु॰ ।

† शब्दस्य शक्तिरेवार्थे सम्बन्धः, तस्यां च संगतिग्रहणकाले ज्ञातायां समयान्तरे शब्ददर्शनात्तस्यार्थे शक्तिरूपसंस्कारोद्बोधे सति ततोऽर्थे स्मृतिर्भवतीति नोक्तान्योन्याश्रय इति परिहरति उच्यत इत्यादिनेति भाव॰ ।

नोत्पद्यत इति च स्ववचनविरोधः । तस्मात्पदेभ्यः पदार्थमात्रेषु बुद्धि-
सामर्थ्यसम्बन्धात् स्मृतय इति सिद्धम् । कुतः पुनस्तत्र ज्ञानसम्भेदाभाव
१ २१ इति तत्राह ज्ञानस्यापीति । शब्दसामर्थ्यविषयतया सम्बन्धित्वेन
स्मृतिविषयत्वे ज्ञानस्यापि शब्दार्थत्वप्रसङ्गादिति । तथेष्टभूभागविषयेत्यादिः
स्पष्टार्थः । ननु स्मृतिज्ञानस्य त्रिकोणत्वादिवत्स्वगतः कश्चिद्विशेषो दृश्यते
८ १ स स्मरणाभिमान इति नेत्याह नापि स्वगतो ज्ञानस्येति । ननु नित्या-
नुमेयेऽपि * लिङ्गविशेषाद्धेतुविशेषानुमानं युक्तमिति । कोऽसौ लिङ्गविशेषः † ।
न तावद्ग्राह्यविशेष इत्याह नापि ग्राह्यविशेषनिमित्त इति । अस्तु तर्हि फल-
विशेषो लिङ्गविशेष इति नेत्याह नापि फलविशेषनिमित्त इति । ननु स्मरा-
मीत्यनुभवः स्मरणाभिमान इत्यत आह यः पुनः क्वचित्कदाचिदिति ।
यदि स्मृतिस्मार्यस्मर्तृविषयशब्दत्रयानुषक्तोऽनुभवविशेषस्तत् स्मरामीति
यदि वा त्रितयविषयमनुमानज्ञानान्तरमेतत् उभयथापि ग्रहणादित्रितयात्
स्मरणादित्रितयस्य ‡ प्रागेव भेदावगममन्तरेण ग्रहणादित्रितयशब्दव्यतिरिक्त-
स्मरणादिशब्दानुस्मरणं ग्रहणानुमानव्यतिरेकेण स्मरणानुमानं च न सम्भ-
वति विशिष्टाभिधेयावगमनिमित्तत्वाद् विशिष्टशब्दानुस्मरणस्य विशिष्टा-
वगमानुमानस्य चेति प्रागेव स्मरामीत्यनुभवाद्ग्रहणस्मरणयोर्भेदो वक्तव्य
इति भावः । ननु स्मृत्यनुभवयोरर्थमात्रविषयत्वे को भेद इत्यत आह ।
तस्मादिति । कारणविशेषादेवेत्यर्थः ।

कथं वा तव स्मृतेर्ज्ञानानुमानस्य चार्थविशिष्टज्ञानविषयत्वे समाने
विभागावगमः । कारणभेदादिति चेदिहापि तत्समानम् । स इत्याकारेण
स्मृतिर्ज्ञानानुमानाद्भिद्यत इति चेत्कोयं स इत्याकारः । परोक्षदेशकाल-
विशिष्टतेति चेदनुमानादिष्वपि प्रसङ्गः । पूर्वानुभवसंभिन्नतेति चेत् । ज्ञाना-
नुमाने § पौरुषेयवाक्यजन्यज्ञाने च प्रसङ्गः । तस्मात्संस्कारजन्यत्वं स इत्या-
,, ११ कार इति । अस्तु तर्हीहापि तथाविधैव स्मृतिरिति नेत्याह ‖ नचेहेति ।

---

* सुरभिधूमविशेषस्याऽगरुजदहनानुमापकत्ववद्ग्राह्यविशेषस्य व्यापकविशेषानुमापकत्व-मित्यर्थ इति तत्त्व० । † विशेषइतीति ३ पु० ।

‡ प्रागेवेत्यत्र स्मरामीत्यनुभवादितिशेषः-तत्त्व० ।

§ नद्यास्तीरे प्रसूनानि सन्तीत्यादिवाक्यान्नदीतीरप्रसूनविषयज्ञानसत्ता बोध्यते ततश्च स्वजनकज्ञानसंभिन्नविषयत्वस्य तत्रापि भावान्न भेद इत्यर्थः-इति तत्त्व० । ‖ न चेतीति २ पु० ।

नच स्वप्ने ऽहं नीलमिति गृह्यमाणाविवेकः । स्मर्यमाणानामऽन्योन्याविवेके परोक्षमेव सर्वमवभासते । अतो न प्रमाणस्मृतिद्वैराश्यमेव * ज्ञानस्य किन्तु तृतीयं भ्रान्तिज्ञानमपीत्युपसंहरति अतो नान्यसंप्रयोग इति । न चेत् स्मृतिः किं तर्हीदं रजतमिति । ८ १२

नन्वन्यथाख्यातिरेषा । तथाहि । शुक्तिकासंप्रयोगे दोषो † पहितमिन्द्रियं देशान्तरादिगतं रजतम ‡ भिगृह्णाति । तच्च स्वदेशाद्यवस्थितं दोषो पहितेन्द्रियेण गृह्यमाणं शुक्तिकात्मना गृह्यते । नन्वननुभूतमपि यत्किञ्चिदपि दोषोपहितमिन्द्रियं किमिति न गृह्णाति । सादृश्यादिदोषसामर्थ्यादिति वदामः । तस्माद्ग्रहणात्मकमन्यथाज्ञानमिति ।

उच्यते । केयमन्यथाख्यातिः । अन्याकारं ज्ञानमन्यालम्बनं वा वस्तुनो वस्त्वन्तरात्मनावभासो वा अन्यथा परिणते वस्तुनि ज्ञानं वा । न तावत्प्रथमः कल्प इत्याह नन्वेवं सति वैपरीत्यमिति । कुतो वैपरीत्यमित्यत आह नैतत्संविदनुसारिणामिति । सर्वत्र यदाकारं संवेदनं तदेवालम्बनमितिनियमे रजताकारसंवेदनविरुद्धं शुक्तिकालम्बनत्वमित्यर्थः । ननु न संविदाकारतालम्बनता सर्वत्र किन्तु संवित्प्रयुक्तव्यवहारविषयेति चोदयति ननु शुक्तेः स्वरूपेणापीति । ,, १६

इदं तावदयुक्तम् । नहि व्याघ्रसर्पादिज्ञानाद्दण्डादिष्वादीयमानेषु व्याघ्रादिज्ञानस्य दण्डाद्यालम्बनम् । नच द्रव्यगुणादिज्ञानप्रयुक्त्या द्रव्यगुणादिष्वादायमानेषु द्रव्यादीनामन्योन्यज्ञानालम्बनत्वं प्रसिद्धम् । तस्मात् तदाकार एवालम्बनमिति नान्याकारं ज्ञानमन्यालम्बनमन्यथाख्यातिरिति बहिरेवोपसंहर्त्तव्यम् । अस्तु तर्हि वस्तुनो वस्त्वन्तरात्मनाऽवभास इति तत्राहाथ तथारूपावभासनमिति । न तावदत्यन्तभेदवादिनां संसर्गः परमार्थः ततश्चानिर्वचनीयानभ्युपगमाच्छून्य एव संसर्गः प्रकाशेत । एवं खण्डो गौरित्यादिसंसर्गप्रत्ययाः सर्वे एव विभ्रमाः प्रसज्येरन्निति बहिरेवैकः पक्षः प्रतिवक्तव्यः ।

---

* विज्ञानस्येति २ पु· । † उपहतमिति २, ३ पु· ।

‡ अभिस्थाने अपिः २ पु· ।

८ १९ अथ भेदाभेदवादी संसर्गसत्यतां ब्रूयात्तत्राह यदि पारमार्थिकमिति । खण्डो गौरित्यादिवत्सर्वस्य भेदाभेदान्न क्वचिदपि भ्रान्तिबाधौ सर्वत्र वा तौ स्यातामित्यर्थः । अस्तु तर्ह्यन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिरिति तत्राह अथ शुक्तेरेवेति । शुक्तेः परिणामनिराकरणग्रन्थः स्पष्टार्थः ।

६ २ अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरित्यादिना ऽन्यथाख्यातावेव परिणामप्रकारभेदो निराक्रियते ख्यात्यन्तरानिराकरणं वा । कथम् । अत्राहात्मख्यातिवादी बुद्धेरेव रजताकारो न बहिरिति । कुतः । संप्रयोगव्यतिरेकेणापरोक्षत्वाद् बुद्धिवत् । कथम् । विज्ञानस्य रजताकारः प्राप्तः । संस्कारसामर्थ्यादिति वदामः । तथाहि । यस्यां ज्ञानसन्ततौ यदा कदाचित्पूर्वं रजतज्ञानमुत्पन्नं तदेव संस्कार उच्यते । नच विज्ञानजन्यो ऽन्येषामिव स्थायी क्षणिको वा ऽन्यः कश्चिदस्य संस्कारो विद्यते विज्ञानमात्रवादात् । स चानेकज्ञानव्यहितोपि कदाचित्सजातीयं रजतज्ञानान्तरमुत्पादयति शालिबीजमिवानेकाङ्कुरादिकार्यव्यवधानेन पुनः सजातीयबीजान्तर * निमित्तमिति । अथवा तज्जन्यज्ञानसन्तान एव संस्कारः स च तथाविधज्ञानान्तरादित्यनादिवासनाप्रापितं रजतं बुद्ध्याकारो बहिर्वदवभासत इति ।

† स वक्तव्यः किं तद्रजतं जायते न वेति । ‡ नचेज्जायमानस्वरूपं न स्यादाकाशवत् । जायते चेत् नार्थादर्थान्तराभावात् । अथ ज्ञानादेव दुष्टकारणजन्याद्रजतोत्पाद इति । तदाह अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पाद इतीति । जनकप्रतीते रजतात्पूर्वकालत्वादतद्विषयत्वात्प्रतीत्यन्तरस्यादुष्टकारणस्य तद्विषयत्वे सर्वप्रतीतिविषयत्वप्रसङ्गात् । दुष्टकारणप्रतीतेश्च रजतजन्यतया तदालम्बनत्वे रजतस्यार्थक्रियावत्तया सत्त्वप्रसङ्गात् । अतज्जन्यत्वे तद्विषयत्वाभावादप्रतीतमेव रजतं स्यादिति भावः । अन्यथाख्यातिं निराकृत्या ऽख्यातिवादी स्वपक्षमुपसंहरति तदेवं पारिशेष्यादिति ।

,, ९ अख्यातिदूषणमप्युक्तमनुस्मारयति ननु स्मृतेरिति ।

ननु न स्मृतिर्नापि ग्रहणं चेदऽलौकिकमिदं ज्ञानं कथमिति चोदयति

---

* बीजान्तरमित्यर्थवेति २, ३ पु० ।

† स च वक्तव्यइति ३ पु० ।

‡ नचेज्जायते जायमानज्ञानस्वरूपमिति २ पु०, नचेज्जायमानज्ञानेति ३ पु० ।

*का तर्हि गतिरिति । † किं ‡ सामग्र्यं पृच्छसि किं वा ज्ञानमथ विषयमिति । ९ १०
यदि सामग्र्यं तत्राह नेन्द्रियज्ञानादित्यादिना । नन्विन्द्रियसंस्कारौ चेत्सामग्री सम्यक्ज्ञानमेवेदं स्यात् स्मृतिग्रहणवदिति चोदयति कथमेतदिति । दोषसहकृतत्वात् तृतीयमिदं सामग्र्यमित्याह । उच्यते कारणदोष इति । ननु दोषः प्राप्तकार्यस्य प्रतिबन्धको § नाधिक्ये हेतुरिति तत्राह कार्यगम्यत्वादिति । नचानादेः कार्यानुदयस्य हेतुर्दोषः । कृत्याभावात् । किन्तु व्याध्यादिवद्विपर्ययकार्यहेतुर्दोष इति । ननु दोषः संस्कारोद्बोधकृच्चेन्न || सामग्र्यामन्तर्भवतीति । न तृतीयमिदं सामग्र्यमिति तत्राहातः संस्कारदुष्टकारणसंवलितेति । अथ ज्ञानस्यैक्यं चोद्यते तत्राह सा चैकमेव ज्ञानमिति ।

नन्विदमा संप्रयोगादन्तःकरणपरिणामज्ञानमेकमुत्पद्यते न तद्रजतं तत्ससर्गं वा विषयीकर्त्तुमीष्टे । मिथ्यावस्तुनि देशान्तरादिगते वा संप्रयोगानुपपत्तेश्चक्षुरुन्मीलनान्वयव्यतिरेकयोरधिष्ठानज्ञानोपक्षयादन्यथासिद्धेः । नापि संस्काराद्रजतांशावगमः स्मृत्यनभ्युपगमात् । नापि दोषः स्वयमेव कस्य चिज्ज्ञानस्य हेतुर्दृष्टः ज्ञानकारणानामेव कार्यविशेषनिमित्तत्वात् । अतो न रजततत्सम्भिन्नशुक्तिविषयमेकं ¶ ज्ञानं समस्ति । किं त्वविद्यैव ** बाह्यदोषनिमित्तकारणापेक्षया रजताकारेण साक्षिचैतन्यस्य रजतावच्छेदज्ञानाभासाकारेण च परिणममाना स्वकार्येण सह साक्षिचैतन्यस्य विषयभावं प्रतिपद्यत इति ते मतम् । तत्र कथमेकज्ञानत्वमिति तत्राह । एकफलमिति । विषयावच्छिन्नं हि फलमवभासते न ज्ञानावच्छिन्नम् । विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मतयैकतामापन्नस्तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमप्येकमित्युपचर्यत इति भावः । अथ विषयः कथमिति तदाह तस्य चेति । कुतो रजतस्य †† मिथ्यात्वमित्यत आह तेन मिथ्यालम्बन- ,, १०

* का पुनर्गतिरिति २ पु॰ ।

† किं करणव्युत्पत्त्या सामग्री पृच्छ्यते उत भावव्युत्पत्त्या ज्ञानमाहो कर्मव्युत्पत्त्या विषय इति विकल्पार्थः-इति तत्त्व॰ ।

‡ सामग्रीमिति ३ पु॰ ।

§ नाधिकहेतुरिति १ पु॰ । || उद्बोधकश्चेति ३ पु॰ ।

¶ दुष्टलोचनपुरोवर्त्तिद्रव्यसंयोगादिदं मात्रविषयं ज्ञानमुत्पद्यते तदा चेदमाकारावच्छिन्नाविद्याक्षोभः संजायते सा च चक्षुषा सदृशसंदर्शनरागसमुद्बुद्धसंस्कारसध्रीचीना रूप्याकारेण परिणमतइत्यर्थ इति तत्त्व॰ । ** एकज्ञानमिति १ पु॰ ।

†† मिथ्याज्ञानत्वमिति १ पु॰ ।

मिति । भावाभावज्ञानयोर्मिथ्यात्वप्रसिद्ध्यभावादिदं ज्ञानसमवायिमिथ्यात्वम-निर्वचनीयार्थतामेव गमयतीत्यर्थः ।

संप्रयुक्तेऽर्थे संप्रयोगो निरपेक्षो ज्ञानकारणं संस्कारश्च पूर्वानुभूतस्मृतौ निरपेक्षः ततश्च निरपेक्षकारणद्वयजन्यत्वात् * ज्ञानद्वयमेव निरन्तरोत्पन्नमि-

९ १८ त्यख्यातिवादी चोदयति भिन्नजातीयज्ञान इति । ज्ञानभेदे हि निरन्तरोत्प-न्नावपि न प्रवृत्तिकार्योदयः सम्भवति तत्र यथा वर्णज्ञानेषु क्रमवर्त्तिषु ज्ञानका-र्योदयान्यथानुपपत्त्या पूर्वपूर्ववर्णसंस्कारसहितमन्त्यवर्णज्ञानमेव हेतुत्वेन कल्प्यते कारणयौगपद्याय तथा प्रवृत्तिकार्यानुपपत्तिरेव ज्ञानैक्यं कल्पयति किं कारणभेदेनेति परिहरति नैष † दोष इति । ननु कारणभेदात्कार्यभेदोप्यनु-मीयत इति नेत्युदाहरणमाह दृश्यते हीति । ननु तत्रापि कारणभेदात् ज्ञानभेद इति नेत्याह उभयत्रापीति । ननु लिङ्गदर्शनं व्याप्तिस्मृतिश्च लिङ्ग-ज्ञानकारणं न संस्कार इति नेत्याह । संस्कारानुद्बोध इति । ज्ञानद्वयायौग-पद्याभावादित्यर्थः । तस्मादित्युपसंहरति ॥ ननु प्रत्यभिज्ञायां संप्रयोगः पूर्वानुभूतस्मृतिश्च कारणं ज्ञानद्वययौगपद्यप्रसङ्गाभावान्न संस्कार इति तत्राहा-

१० १ यमेव न्याय इति । ज्ञानाज्ज्ञानोत्तरोत्पत्तौ व्याप्त्याद्यभावात्संस्कार एव कार-णमित्यर्थः । ननु प्रमाणान्तरेष्वयं निरपेक्षकारणसमाहारः नाभिज्ञाप्रत्यक्षे अभिज्ञाप्रत्यक्षं ‡ च रजतज्ञानमिति तत्राह तथा भिन्नजातीयज्ञानहेतुस्य इति । ननु यत्र संस्कारः प्रमाणकारणेन संबध्यते तत्र स्मृतिगर्भप्रमाणज्ञानमेव दृष्टं न तथेदं रजतज्ञानमिति तत्राह तत्र लैङ्गिकज्ञान इत्यादिना ।

किञ्च । ज्ञानद्वयपक्षेऽख्यातावपरोक्षावभासिनः स्मर्यमाणत्वे सर्वत्र प्रति-पन्नोपाधौ विषयसत्त्वाभावेऽन्यथाख्यातौ प्रतिपन्नस्य संसर्गस्य शून्यत्वे पुरोदे-शप्रतिपन्नस्य रजतस्य § देशान्तरसत्त्वे चात्मख्यातौ बहिरवभासस्यान्तरत्वे-

,, ४ चानुभवविरोधः स्यान्न तथास्मत्पक्ष इत्याहैवं च सति नानुभवविरोध इति । ननु तवाप्यस्तीति प्रतिपन्नस्यानिर्वचनीयत्वे ऽनुभवविरोधः समानः । तन्न । इदन्तासंसर्गवद्रजतस्य शुक्तिकासत्तासंसर्गोऽयमवभासते न रजतस्यापरसत्त्वम् ।

* ज्ञानद्वयमेतन्निरन्तरेति २ पु० ।

† नैषदोषेति २ पु० ।

‡ चेदं रजतमिति ज्ञानमितीति ३ पु० ।

§ देशान्तरसत्त्वे चेति २ पु० ।

अथवा त्रिविधं सत्त्वं परमार्थसत्त्वं ब्रह्मणः अर्थक्रियासामर्थ्यसत्त्वं मायोपाधिकमाकाशादेः अविद्योपाधिकसत्त्वं रजतादेरिति परमार्थसत्त्वापेक्षया ऽनिर्वचनीयमिति नानुभवविरोधः यथानुभवमर्थसत्त्वाभ्युपगमात् ।

यस्मात् भ्रान्तित्वव्यवहारः सदसज्ज्ञानयोरनुपपन्नो यतश्च पक्षान्तरेष्वनुभवविरोधो यतश्च ज्ञानद्वय * पारोक्ष्यस्मृतित्वस्मरणाभिमानप्रमोषतद्भेदविवेकतन्निमित्तप्रवृत्तयो जन्मान्तरानुभूतस्मृतिश्चेत्यप्रतिपन्नमपूर्वं बहु † कल्पनीयमख्यातावन्यथाख्यातौ चा ‡ न्यत्र प्रतिपन्नस्यान्यत्र सत्त्वमिन्द्रियस्य च जन्मान्तरानुभूतदेशकालव्यवहितार्थग्राहित्वं दोषस्य च तथाविधादृष्टसामर्थ्यं § संसर्गस्य च शून्यस्य प्रत्यक्षतेति प्रमाणविरुद्धं बहु कल्पनीयं अतः सर्वदोषपरिहाराय यथाप्रतिपन्नस्य मिथ्यात्वं नामैकः स्वभावो नास्ति रजतं मिथ्यैव रजतमभादित्यनुभवसिद्धः समाश्रयणीयो ऽविद्योपादानकल्पनायाश्चान्वयव्यतिरेकसिद्धत्वादित्याहातो मायामयमिति । सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदोवभासमानो मायामिथ्याऽनिर्वचनीयख्यातिरध्यास एवायमित्यर्थः । १० ५

अत्र केचिदाहुः । अतो ऽविद्यामयमिति वक्तव्यं न मायामयमिति । विभ्रमाणां तत्त्वज्ञाननिराकार्यतया ऽविद्यात्मकत्वान्मायाविद्ययोर्भेदात् । तथाहि मायास्वाश्रयमव्यामोहयन्ती कर्तुरिच्छामनुवर्तते न तथा ऽविद्या । प्रसिद्धश्च मायाऽविद्ययोर्भेदो लौकिकानां नहि मायाविनिर्मितहस्त्यश्वरथादावविद्याशब्दं प्रयुञ्जत इति ।

उच्यते । लक्षणभेदाल्लोकव्यवहारसामर्थ्याद्वा ‖ तयोर्भेदः कथ्यते । न तावल्लक्षणभेदादनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययावभासलक्षणस्याविशेषात् । ननु मन्त्रौषधादिसत्यवस्त्वेव माया नानिर्वचनीया । न । परिदृश्यमानमिथ्यावस्तुन्येव मायाशब्दप्रयोगात् । पार्श्वस्थस्य मन्त्रौषधाद्यपरिज्ञानात्तत्र मायाशब्दप्रयोगाभावाच्च मन्त्रादेश्च काचादिवन्निमित्तकारणत्वादध्यासोपादानाविद्याकृप्तिवत्कादाचित्कमायोपादानानिर्वचनीयानादिवस्तुकल्पना ¶ । तत्र च

---

* परोक्षेति ३ पु· ।
† कल्प्यमिति २ पु· ।
‡ अत्र प्रतिपन्नस्येति २ पु· ।
§ संसर्गस्य शून्यस्य च प्रत्यक्षतेति १, २ पु· ।
‖ अनयोरिति २ पु· ।
¶ कल्पनादिति २ पु· ।

*मायां तु प्रकृतिमिति श्रुतौ प्रकृतौ मायाशब्दप्रयोगात् प्रकृतिभूतयोर्मायाविद्ययोस्त † द्विकारयोश्चाध्यासमाययोर्लक्षणाभेदादेकत्वमवगम्यते ।

ननु स्वाश्रयव्यामोहाव्यामोहहेतुत्वाभ्यां लक्षणभेदो दर्शितः । यदाश्रयो द्रष्टा व्यामुह्यत्येव पार्श्वस्थो मायां पश्यन् । अथ कर्ता न तस्य मायावित्वाद्व्यामोहाभावः । किन्तु बाधनिश्चयप्रतिकारज्ञानाभ्याम् । अन्यथा पार्श्वस्थवत्कर्तापि व्यामुह्येदेव । अथेच्छया कर्तुं शक्यते माया न तथा ऽविद्येति । न तदपि मन्त्रौषधादौ निमित्तकारणे कर्तुः स्वातन्त्र्यान्न मायायां अविद्यायामपि अङ्गुल्यवष्टम्भादिना द्विचन्द्रकेशोण्डुकादिभ्रमा मन्त्रौषधादिनिषेवणात्स्वप्नभ्रमाम्तत्त्वज्ञानेप्यनुवृत्तप्रतिभासाश्च कर्तुरिच्छया निष्पाद्यन्ते ।

नच शास्त्रव्यवहारान्मायाविद्याभेदः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतौ सम्यक्ज्ञाननिवर्त्याविद्यायां मायाशब्दप्रयोगात् । तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नम इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानात् । मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादितिसूत्रे सूत्रकारेण स्वप्ने मायाशब्दप्रयोगात् । भाष्यकारेण चाविद्या माया ऽविद्यात्मिका मायाशक्तिरिति तत्र तत्र निर्देशात् । टीकाकारेण चाविद्यामायाऽक्षरम् इत्युक्तत्वात् । ब्रह्मसिद्धिकारेण चैवमेवेयमविद्या माया मिथ्याप्रत्यय इत्युक्तत्वात् । तस्माल्लक्षणैक्याद्वृद्धव्यवहारे चैकत्वावगमादेकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन मायाऽऽच्छादनप्राधान्येनाविद्येति व्यवहारभेदः । इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेद इति युक्तं मायामयमिति ॥

अस्तु तर्हि प्रतिपन्नोपाधावेव यथाप्रतिपत्ति परमार्थसत्त्वम् कल्पनागौर-
१० ६ वादिदोषपरिहारादिति नेत्याह अथ पुनरिति । ननु ‡ कारणदोषवतामेव तद्दृश्यमिति नेत्याह यतो नहीति । तदभावे न तत्रेति § सर्वत्र परमार्थरजत
„ ८ इत्यर्थः । आत्माश्रयाविद्यात्मकत्वेपि सर्वैरेव गृह्येतेति नेत्याह मायामात्रत्वे इति । प्रसिद्धमायावदिति भावः । इदमाकारावच्छिन्नसाक्षिचैतन्यसमाश्रितस्य

---

* मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति श्रुताविति ३ पु० ।

† तदितिपदं नास्ति २ पु० ।   ‡ करणेति ३ पु० ।

§ सर्वपरमार्थेति १, २ पु० ।

रजतस्य शुक्तिकासंभेदोऽप्यविद्यात्मक इति सुखादिवदनन्यवेद्यत्वमिति भावः । ज्ञानस्यैव भ्रान्तित्वप्रसिद्ध्यनुपपत्तिः कल्पनालाघवानुभवाभ्यामनुगृहीता मिथ्यार्थज्ञानतां गमयतीत्युक्तम् इदानीं बाधकप्रत्यक्षं स्वयमेव रजतस्य मिथ्यात्वं प्रतिपादयतीत्याह किञ्च नेदं रजतमिति । १० ९

ननु प्रतिपन्नोपाधौ रजतादेरभावं बाधो बोधयति न तस्य मिथ्यात्वमिति चोदयति कथमिति । प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वं नाम तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितयावभासत इति प्रत्यक्षमित्याह तेन हि तस्येति । बाधकज्ञानसिद्धस्य प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य पुनः स्वशब्देन परामर्शाच्च बाधविषयो मिथ्यात्वमित्याह नेदं रजतं मिथ्यैवेति । ननु देशकालान्तरबुद्धिषु सत्त्वादपि रजतस्यैवं बाधः संपत्स्यत इति नेत्याह नच तत्केन चिद्रूपेणेति । ,, १२ नेदं रजतं किन्तु तद्रजतं बुद्धिर्वेति स्यात्परामर्शो न मिथ्यैवेति स्मृतिग्रहणाविवेकत्वाद्द्वयादाविवेत्यभिप्रायः ।

ननु कोऽयं बाधो नाम । * अन्यार्थिनो ऽन्यत्र प्रवृत्तिनिरोधः तर्हि यत्र रजतादौ परिव्राजकादेः प्रवृत्तेरेवानुदयः तत्र बाधप्रसिद्धिर्न स्यात् प्रसिद्धश्च तत्रापि बाधः । न प्रवृत्तिविच्छेदो बाधः किन्तु प्रवृत्तियोग्यताविच्छेदश्चेत् न । पुनरपि तत्रैव रजताविवेकादन्यदाप्रवृत्तिदर्शनात् योग्यताऽविच्छेदात् उदकज्ञानाच्च प्रवर्तमानस्य सर्पचोरादिदर्शनेन प्रवृत्तिनिरोधे सर्पादिज्ञानादुदकज्ञानस्य बाधप्रसिद्धिः स्यात् । अविविक्ततया प्रतिपन्नस्य विवेको बाध इति चेत् न । सर्वपदार्थेषु प्रथममविविक्ततया प्रतिपन्नेषु पश्चादितरेतरापेक्षया भेदज्ञानं सर्वत्र बाधः स्यात् । नच पदार्थज्ञानमेव भेदज्ञानम् गृहीतमात्रस्य सति भेदे ऽविवेकाभावप्रसङ्गादित्युक्तम् । अन्यात्मना प्रतिपन्नस्येतरेतराभावप्रतिपत्तिबाध इति चेत् । शुक्लो घट इति प्रतिपद्य घटस्य शौक्ल्यं न द्रव्यं गुण इति ज्ञानं सर्वत्र बाधः स्यात् न तथा प्रसिद्धिरस्ति । समानौ च सर्वत्र भेदाभेदावित्यैक्यं प्रतिपद्य भेदप्रतिपत्तिः सर्वत्र बाधः स्यात् । न च ज्ञानस्य प्रध्वंसो बाधः स्वयं क्षणिकत्वात् अर्थस्य च संविद्विषयस्यान्यस्य वा ज्ञानेन प्रध्वंसायोगात् बाधस्य च लोकप्रसिद्धत्वात् । तस्मान्न बाधं पश्यामः ।

---

* यद्यन्येति २ पु॰ ।

उच्यते । अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः तथाविधानवबोधनिवृत्तौ बाधप्रसिद्धेरिति ॥ स्मृतिरूपशब्देन कारणवितथजन्यत्वमुक्तम् । तच्च कारणवितथजन्योऽन्यस्यान्यात्मतावभासो * लक्षणं तदिदं लक्ष्यं न व्याप्नोतीति चोदयति ननु न व्यापकमिति । कथं लक्षणांशस्याभाव इति तत्राह न हि स्वप्नशोकादाविति । संप्रयोगस्य कारणांशस्याधिष्ठानांशस्य † चाऽभावादित्यर्थः । कस्तर्हि स्वप्न इति तदाहात एवेति । तच्च वासनाजन्यस्मृतिमात्रत्वे भ्रान्तिप्रसिद्धिर्गवयादिस्मृतिवन्न स्यादिति परिहरति न तावत्स्मृतित्वमिति । ननु कारणवितथाभावान्न ज्ञानान्तरमपीत्याह ननु स्मृतिरूपत्वमपि नेति ।

१० १३

कारणवितथजन्यत्वमन्यस्यान्यात्मनावभासं च सम्पादयामीत्याह अत्रोच्यत इति । सम्प्रयोगाभावादपरोक्षावभासित्वाद् ग्रहणस्मृतिमात्रत्वे प्रत्युक्ते तृतीयमिदं विज्ञानं स्वयमेवोक्ताध्यासलक्षणं गमयितुं समर्थमिति वदितुं प्रकारान्तरं पर्युदस्यति उक्तमेतदिति । स्वप्नप्रपञ्चविपरीतप्रमात्रादिविज्ञानसाधनस्यान्तःकरणस्य निद्रादिदोषपूर्वानुभवसंस्कारसहितस्य संप्रतिपन्नकारणवितथत्वादुक्तं स्मृतिरूपं भ्रान्तिज्ञानमित्याह तदिह निद्रादिदोषोपप्लुतमिति ।

,, १९

कथं परत्रपरावभास इति तदाह तस्य चेति । निद्रादिदोषसंस्कारोपप्लुतेनान्तःकरणेन मिथ्याध्यासनिमित्तकारणेनावच्छिन्नचैतन्यस्याऽविद्याशक्तिः पुष्कलनिमित्तकारणसंसर्गादध्यासं प्रति पुष्कलकारणता ‡ मापद्यमाना मिथ्यार्थालम्बनाकारेण विवर्तत इति चैतन्यमेव स्वाविद्यया विवर्तते अतः सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभासलक्षणः परत्रपरावभासो विद्यत इति भावः । तथा जागरणेपि बाह्याधिष्ठानांशसंसृष्टान्तःकरणावच्छिन्नतया बाह्याधिष्ठानसंसृष्टचैत्यन्यस्याविद्याशक्तिर्बाह्याधिष्ठानसंसृष्टरजताद्याकारेण विवर्तत इति शुक्तिकाद्यवच्छिन्नं चैतन्यं रजताद्यालम्बनमिति बाह्यालम्बनं रजतादि कथ्यते । सर्वत्र तु चैतन्यमेव साक्षाद्धान्यावच्छिन्नतया वा विभ्रमालम्बनमिति युक्तः परत्रपरावभास इत्यर्थः ।

---

* आत्मानावभास इति २ पु० । † चस्थाने वाकारः १ पु० ।
‡ आपद्यमानामिथ्यार्थेति १ पु० ।

आकाशवत्सर्वविषयोपरक्ततया सर्वत्रावभासमानमात्मानमनादृत्याहमित्येवावच्छिन्नमात्मानमुपादाय चोदयति नन्वेवं सत्यन्तरेवेति । आत्मैवाधिष्ठानं चेदिदं रजतमितिवदहं नीलमित्येव स्वप्नप्रपञ्चो भायादित्यर्थः । * निष्कृष्टाहङ्कारं चैतन्यमात्रमात्मानमादाय † चेत्यस्य च चित्सामानाधिकरण्यावभासं सर्वत्राङ्गीकृत्य परिहरति को वा ब्रूत इति । पुनरप्यहङ्कारावच्छिन्नमात्मनमादाय चोदयति ननु विच्छिन्नदेश इति । इदमिति पृथक्त्वयेत्यर्थः । पृथक्त्वावभासोऽप्यन्तरेवेत्याह ननु देशोऽपीति । अनवच्छिन्नचैतन्यसंसृष्टतयैव ‡ भेदावभासोपीति भावः । अहङ्कारावच्छिन्नमादायाहं भेद इत्यपि प्रतीयादित्याह अयमपीति । निगूढाभिसन्धिरेव पूर्वमुत्तरमुक्त्वेदानीं सर्वतो § विप्रसृतचैतन्यं सर्वात्मना प्रकाशमानमात्मानं स्पष्टीकुर्वन्नाह नैष दोषो जागरणेपीति । प्रातिभासिकभेदमन्तरेण प्रमाणतो न भिद्यत इत्यर्थः । नन्वहमवच्छिन्नचैतन्यादन्यान्येव विषयगतचैतन्यानि किं न स्युरित्यत आह अन्यथा जडस्येति । स्वयं चैतन्यहीना विषया आत्मावगतिप्रकाशेनापि न संसृज्यन्ते चेन्मयावगता इति सम्बन्धावभासो न स्यादित्यर्थः ।　　१० २०　　११ ३

सर्वत्र चैतन्यावगुण्ठनेपि अहमिदमिति चात्मानात्मानौ विभक्ताविति प्रतिभासः कथमिति तत्राह यः पुनरिति । ननु चैतन्यमेव सर्वत्रान्तर्बहिर्भेदादिरूपेणावभासते चेत्कथन्तस्याखण्डाद्वितीयतेति । चेत्यभेदोपरागनिमित्तभेदमन्तरेण स्वरूपभेदानवगमादित्याह तस्य च निरंशस्येति । निरंशद्रव्यस्याणुत्वमनन्तत्वं वा स्यान्मध्यमपरिणामं चेदं चैतन्यं सर्वत्रावभासते नच निरंशं मध्यमपरिमाणमिति । परोपाधिपरिमाणं चैतन्यमित्यर्थः । जागरणेप्येवं किमुक्तव्यं स्वप्नस्य चैतन्याधिष्ठानत्वमित्यर्थः ।

केवलस्य मनसो बहिःप्रत्यक्षसाधनत्वाभावादथवेत्यङ्गीकरणवादः । || अव्याप्तिः परिहृता इदानीं मिथ्याध्यासभ्रान्त्यविद्याप्रसिद्ध्यभावेप्यन्यस्यान्यावभासो विद्यत इतिलक्षणस्यातिव्याप्तिमाह कथं तर्हि नामादिष्विति ।　　,, ८

* निष्कृष्टः पृथक्कृतः अहङ्कारो यस्मात्तत्तथोक्तम् इति तत्त्व० ।

† अनवच्छिन्नात्मगततयाऽपि प्रतिभासाभावमाशङ्क्य घटः स्फुरति पटः स्फुरतीति चित्सामानाधिकृततया प्रतीतिरस्तीत्याह चेत्यस्येतीति तत्त्व० ।

‡ भेदावभासोप्यहङ्कारेति १ पु० ।　　§ विप्रसृतमिति २, ३ पु० ।

|| अव्याप्तिं परिहृत्येदानीमिति २ पु० ।

अन्यस्यान्या * त्मतावज्ञानम † ध्यासलक्षणमियं त्वन्यस्यान्यत्र मानसी क्रियेत्य-

११ ९ तिव्याप्तिं परिहरति सत्यमत एव चोदनावशादिति। ननु ज्ञानमेव तत्र विधीयत इति नेत्याह नहि ज्ञानमिति। विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्ष-मेव सर्वत्र ज्ञानस्य पुष्कलकारणम् अनिच्छतोप्यनिष्टज्ञानदर्शनात् अतो विधानान्मानसी क्रियेति भावः।

ननु स्मृतिज्ञानमित्यारभ्य तं केचिदित्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। नन्वध्यासे वादिविप्रतिपत्तिदर्शनान्नैकरूपेण लक्षणं व्यवस्थापयितुं शक्यत इत्याशङ्क्याधिष्ठानाध्यस्यमानयोः स्वरूपतत्त्वदेशकाल ‡ विशिष्टेष्वेव वादिनां विप्रतिपत्तिरन्यस्यान्यात्मनावभासमात्रे § लक्षणे न विप्रतिपत्तिः। तच्च लक्षणं लौकिकसामान्यविशेषादिसंसर्गप्रत्ययानां भ्रमत्वप्राप्तिपरिहाराय। सत्यस्य मिथ्यावस्तुसम्भेदावभास इति बलादापततीत्यङ्गीकृत्य मतान्तराण्युपन्यस्यति तं केचिदित्यादिना। प्रथमस्त्वात्मख्यात्यन्यथाख्यातिविशेषयोः द्वितीयस्त्व-ख्यातेः तृतीयस्तु शुक्तेः स्वाभावरजतात्मना ख्यातिरिति शून्यख्यात्यन्य-थाख्यातिविशेषयोरुपन्यासः। कल्पनामित्यस्य व्याख्या अविद्यमानस्यैवावभा-समानतामिति। यल्लक्षणमवादिष्मेति पूर्वेण लक्षणशब्देन यच्छब्दस्य सम्बन्धः। अख्यातिवादिनापि मानसं संसर्गज्ञानं संसर्गाभिमानो वा वक्तव्य इत्यभि-

१२ ५ प्रायः। ननु स्मृतिरूपतया कारणत्रितयजन्यत्वमुपेक्षितमिति नेत्याह पूर्व-दृष्टत्वेति।

नन्वविद्यादिदोषपूर्वभ्रमसंस्काराभ्यामेव पदार्थमात्रज्ञानानि जायमा-नानि ‖ विभ्रमाः। न सत्यं वस्तु तत्संप्रयोगादि प्रमाणकारणं ¶ चापेक्षते विभ्रम इति परत्रेतिपदमविवक्षितमिति शून्यवादी मन्यते तत्राह स्मृतिरूपः पूर्वदृष्टावभास इति। न पदार्थमात्रज्ञानं विभ्रमः शून्यज्ञानस्यापि तथात्व-प्रसङ्गात् किन्त्वन्यत्रान्यज्ञानम् ततश्चाविभ्रमेपि पदार्थज्ञाने लक्षणव्याप्तेर्नि-

,, ८ रुपपत्तिकत्वमिति। कथं निरुपपत्तिकोयमित्यादिग्रन्थः स्पष्टार्थः। ननु

---

* आत्मना ज्ञानमिति २ पु०। † अध्यासस्येति २ पु०।
‡ विशिष्टेष्वेवेति १ पु०। § लक्षणे इति नास्ति १, ३ पु०,
‖ विभ्रम इति १, पु०। २ पु० विभ्रमा इति पश्चाच्छोधितम्।
¶ सापेक्षते इति २ पु०।

संविद्रजतयोरितरेतराधिष्ठानत्वेन साधिष्ठाने भ्रमे सम्भवति न तृतीयस्य सत्यवस्तुनो ऽधिष्ठानत्वकल्पना युक्तेति चोदयति ननु रजते संविदिति । १२ ११
नन्वध्यस्यमानव्यतिरेकेणाधिष्ठानस्य सिद्धिर्वक्तव्या तच्चेतरेतराधिष्ठानत्वे सती-तरेतरापेक्षसिद्धित्वादसमञ्जसं स्यादिति तत्राह बीजाङ्कुरादिवदिति । न बीजाङ्कुरादिष्वितरेतराश्रयता किन्तु कारणपरम्परया ऽनवस्थेति परिहरति । नैतत्सारमिति । नन्विहापि कारणपरम्परेति नेत्याह * इह पुनर्यस्यामिति । नन्विहापि तर्हि रजते संवित् रजतं पूर्वस्यां संविदि सा च स्वविषये स च † पूर्वसंविदीति परम्परामेव कल्पयामीति चेत् । यदि तावत्पूर्वपूर्वमुत्तरो-त्तरस्यान्वितत्वेनाधिष्ठानं स्यात्ततः पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्नध्यासे युगपदवस्थानात् क्षणिकत्वहानिः । ननु बीजाङ्कुरादावन्योन्योपादानत्वेपि न युगपदवस्थानं दृश्यत इति तत्राह बीजाङ्कुरादिष्वपीति । अभिमतवस्तुसिद्धिः अन्वयिकारणत्वसिद्धिरित्यर्थः । अनन्वितेषु बीजादिष्वन्वयिकारणाकाङ्क्षाया अनिवृत्तत्वादित्यर्थः । अतो ऽन्वयिद्रव्यमेव तत्राप्युपादानं बीजादेरन्योन्यनि-निमित्ततेति भावः । इहापि तर्हि पूर्वस्योत्तरं प्रत्यनन्वितत्वेनैवाध्यासनिमि-त्तता बीजादिवदिति नेत्याह कुत इदमेवमिति पर्यनुयोगे दृष्टत्वादेवमिति । अयं भावः । बीजाङ्कुरयोः कार्यकारणभावस्य दृष्टत्वाददृष्टेपि तयोरेव कार्यका-रणपरम्परा दृष्टपरम्परात्वान्नानवस्थादोषमावहति संविद्रजतयोरधिष्ठानाधि-ष्ठेयतया निमित्तनैमित्तिकभावस्य प्रथममेव कल्प्यत्वात्तयोरेव पूर्वपूर्वनिमित्तनै-मित्तिकभावकल्पना त्वन्धपरम्परैव स्यादिति । दृष्टपरम्परामेव दर्शयति दृष्ट-त्वादेवमिति । तत्रैव दूरं वेति नानवस्थादोषमतिवर्त्तत इत्यन्धपरम्परामेवे-त्यर्थः ।

द्व्याकारावभासत्वात्सर्वभ्रमाणां परत्र परावभास एव भ्रम इत्युक्तं भ्रान्तिज्ञानप्रतिपन्नविषयेऽर्थे ‡ भ्रान्त्यंशाभावविशिष्टांशान्तरज्ञानस्य बाधकत्वाच्च साधिष्ठानो भ्रम इत्याहापि च न क्वचिदिति । नन्वनुमानाप्रवचनाभ्यां सर्पा- ,, १८
भावमात्रमपि कदाचिद्गम्यते न तदभावविशिष्टमंशान्तरमिति तत्राह यत्राप्य-

---

* इहेति नास्ति २ पु० ।
† पूर्वस्यां संविदीति २ पु० ।
‡ भ्रान्त्यंशान्तराभावेति २ पु० ।

नुमानादिति। तत्र प्यभावविशिष्टं वस्तुमात्रं गृह्यते विशेषाकाङ्क्षादर्शनादिति भावः। ननु प्रधानं नास्तीत्यादौ न तदभावविशिष्टं वस्त्वन्तरं गृह्यते तेषा-

१२ २० मन्यत्रानध्यस्तत्वादिति तत्राह प्रधानादिष्वपीति। अथवा * सर्वभ्रमावभासेषु च साक्षिचैतन्यस्यालम्बनस्य विद्यमानत्वाच्छङ्क्यमाननिरधिष्ठाननिरवधिकभ्रम-बाधेपि साक्ष्येवाधिष्ठानमवधिश्च विद्यत इत्याह अथवा सर्वलोकसाक्षिकमिति।

नन्वर्थबाधया ज्ञानस्यापि बाधात् भ्रमबाधे तदवभासिसाक्षिचैतन्य-मपि बाध्येतेति तत्राह तद्बाधे तदनुपङ्ग एवेति। अधिष्ठानत्वेनापि परिशे-षादिति भावः। अत इत्युपसंहारः। तदेव प्रपञ्चयति तेन तन्मात्रस्येति। साधिष्ठानभ्रमसाधनप्रसङ्गेनाध्यस्तस्यापि शून्यतां निराचष्टे नाप्यध्यस्तमप्य-सदिति। प्रत्यक्षतो रजतमिति विशेषप्रतिभासायोगप्रसङ्गादिति भावः। प्रतिभासमात्रनिराकरणे शून्यं न भासत इतिवाक्यस्याबोधकत्वप्रसङ्गात्।

१३ १ ननु अध्यस्तं सर्वं शून्यमेवेति तेपि मतमिति चोदयति नन्विति। शून्याद्व्या-वृत्तिरपि भ्रमस्य कथितैवेत्याह क एवमाहेति। सद्व्यावृत्तिमात्रं भ्रमस्यासत्त्वं नाम न शून्यत्वम् निषेधप्रतियोगित्वादिति भावः। ननु भ्रमस्य स्वकाले ऽनिर्वचनीयत्वेपि बाधादूर्ध्वं शून्यत्वमविशिष्टमिति शङ्कते अथ पुनरिति। सर्ववादिनां सर्वं वस्तु स्वकाले वर्तमानमपि विनाशादूर्ध्वं शून्यमेवेति सम्म-ततो न दोष इत्याह काममिति।

ननु भवतु नाम सर्वस्य वस्तुनो विनाशादूर्ध्वं शून्यता न विभ्रम-गृहीतं वस्तु बाधादूर्ध्वं शून्यं भवति किन्तु देशान्तरादिगतमिति चेत् तत्र किं बाधकज्ञानमेव रजतादेर्देशान्तरे सत्त्वं गमयति † किंवेह बाधानुप-पत्तिरिति न तावद्बाधकज्ञानमित्याह तथाच बाधकज्ञानमिति। नेदं रजतं किन्तु देशकालान्तरे बुद्धौ वेत्यनवगमादिति भावः। यावदभिधानसामर्थ्यं हि वाक्यमर्थं प्रतिपादयति देशान्तरवर्तित्वं ‡ त्वनभिहितं न वाक्यार्थ इत्यर्थः।

एवं सति प्रतिपन्नस्य वस्तुनो ऽत्राभावो ऽन्यत्र सत्त्वमन्तरेणानुप-

,, ५ पन्न इत्यर्थापत्त्या वाक्यं गमयिष्यतीति नेत्याह नार्थापत्त्येति। अन्यथाख्यातौ

---

* सर्वधर्मावभासेष्विति २ पु०।

† किंवेहेति २ पु०।

‡ तुशब्दो नास्ति २ पु.।

निषिद्धस्य संसर्गस्यात्मख्यातौ बहिष्ठस्य वान्यत्र सत्त्वमन्तरेण निषेधदर्शना-दख्यातावपि ऋत्विग्विच्छेदे सर्वस्वदानकर्तव्यताबुद्धावृत्विग्विच्छेदान्तरनिमित्ता * ऽदक्षिणयागसमाप्तिविज्ञानबाधितायां न सर्वस्वदानकर्तव्यता तत्र प्रतिपन्नान्यत्र सतीति कल्प्यते। प्रवृत्तिरेव तत्र निरुध्यत इति चेन्न। प्रवृत्तिनिरोधो न बाध इत्युक्तत्वात्। यागादिषु च प्रवर्तमानस्य राजचोरादिप्रतिबन्धनिश्चयात्प्रवृत्तिनिरोधेपि यागादिबुद्धौ बाधप्रसिद्ध्यभावात्सत्यां चाबाधितकर्तव्यताबुद्धौ यदाकदाचित्प्रवृत्तिसिद्धिः।

किञ्च। लोकेपि प्रतिपन्नोपाधावेव यस्य निषेधस्तस्य निषेधोपाधिसजातीयोपाध्यन्तरे सत्त्वं न कल्प्यत इत्याह इह भग्नघटाभाववदिति। यथा १३ ७ प्रतिपन्नदेशे निषिद्धस्य घटस्य न देशान्तरे सत्त्वमेवं प्रतिपन्नदेशकालवस्तुसर्वोपाधौ निषिद्धस्य न प्रतियोगित्वेनाप्रतिपन्नसर्वोपाधौ सत्त्वसिद्धिरित्यर्थः। ननु कथं सर्वत्र शून्यस्य प्रतिपत्तिरिति तत्राह तन्मात्रेणापि तत्सिद्धिरिति। अत्रैवानिर्वचनीयमिथ्यावस्तुसद्भावमात्रेणापि तस्याः प्रतीतेः सिद्धिरित्यर्थः।

ननु तर्हि पूर्वं रजतमभूदिदानीं नेति घटवत्कालभेदेन निषेधः स्यात्। न लौकिकपरमार्थरजतस्यात्रकालत्रयेपि शून्यत्वात्तदपेक्षया निरुपाधिकनिषेधसिद्धेः। निरुपाधिकनिषेधसामर्थ्याच्च प्रतिपन्नं मिथ्यारजतमिति बाधानन्तरं परामृश्यते मिथ्यैव रजतमभादिति। अन्यथा कालभेदे सत्यरजतमेव स्यान्नायं सर्प इत्यभावमात्रविषया हि प्रत्यक्षप्रतिपत्तिर्न देशान्तरे सर्पसत्त्वं गमयति किमु वक्तव्यं रज्जुरियमित्यधिष्ठाने पर्यवसिता प्रतीतिर्न कल्पयतीति दर्शयति यत्रापि सर्पबाधपूर्वक इति। तदेवमित्याद्युपसंहारः। यद्येवं परत्रेत्यादिः स्पष्टार्थः।

सत्यं विस्पष्टार्थमित्यस्यायमर्थः। स्मृतिरूपशब्देन किं संस्कारज- ,, १६ न्यत्वं पूर्वानुभवसम्भेदो वा स्मृत्या सादृश्यं भ्रान्तेरभिधीयते इति विशये संस्कारजन्यत्वमेवेति स्पष्टीकरणार्थं पूर्वदृष्टस्यावभासो न दर्शनस्येत्युक्तमिति। पूर्वदृष्टसजातीयस्येत्यर्थो निर्वचनीयरजताभ्युपगमाद्भ्रान्तिश्चेत्सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासो ऽन्यथातिप्रसङ्गादित्याद्या या युक्तिरभिहिता लोकानु-

---

* अदक्षिणायागेति १, ३ पु०।

१३ १६ भवसिद्धत्वादध्यासस्य तथापि युक्त्या न प्रयोजनमित्याह तथाच लोकेऽनुभव इत्यादिना ।

ननु शुक्तिका रजतवदिति च वचनं न भ्रान्त्यपेक्षयोपपद्यते इदं रजतमित्येवावभासनात् । नच बाधापेक्षा तत्र वत्करणाभावादिति चोदयति ननु न शुक्तिकेति । बाधकज्ञानापेक्षया शुक्तिका रजतमवभासत इति लक्षणप्रदर्शनं बाधकज्ञानविषयतया वा तत्सामर्थ्येन वा सिद्धस्याध्यासस्य मिथ्यात्वस्य लक्ष्यस्य वच्छब्देन अभिधानमिति लक्ष्यलक्षणसङ्गतिरनेन वाक्येन तत्र प्रदर्श्यत इत्याह उच्यते शुक्तिकाग्रहणमिति । ननु मिथ्या रजतमिति विशेषणादन्यच्च सत्यरजतं वक्तव्यमिति नेत्याह मिथ्यात्वमपि रजतस्येति । स्वरूपपरं विशेषणं नान्यव्यावृत्तिपरमित्यर्थः । ननु रजतस्य मिथ्यात्वे तद्धर्मत्वादिदन्ताया अपि मिथ्यात्वात्सर्वमिथ्यात्वेन निरधिष्ठानताप्रसङ्ग इति नेत्याह तत्रासंप्रयुक्तत्वादिति । कथं तस्यासम्प्रयुक्तस्य रजतस्य परोक्षतेत्यत आहा-

१४ १ ऽपरोक्षावभासस्त्विति ।

उदाहरणद्वयस्य तात्पर्यमाह तत्र शुक्तिकोदाहरणेनेत्यादिना अस्मदर्थे अहमिति प्रतिभास इत्यर्थः । प्रतिभासता युष्मदर्थत्वाभावेऽपि चिदवभास्यत्वं नाम युष्मदर्थलक्षणमस्तीत्याह तदवभास्यत्वेनेति अद्वितीयचैतन्यप्रकाशात्मनि द्रष्ट्रयहङ्कारादिसङ्घातस्याध्यस्तत्वादध्यस्यमानव्यतिरिक्तमधिष्ठानमध्यासाधिष्ठानयाथात्म्यविषयप्रमाणज्ञानं द्रष्टा चेति चितयमात्मेति वक्तव्यं ततश्चाधिष्ठानगतो दोषो * दृष्टृदोषः प्रमाकरणदोषो † वा सर्वं दोषजातमात्मन्येवेति वक्तव्यं तदभावाच्चैतन्यस्याध्यासविषयज्ञानस्याजन्यत्वात्कारणचितयजन्यविज्ञानस्यात्मन्यनात्माध्यासे सम्भवात् अगृहीतविशेषस्य सामान्यग्रहणस्याधिष्ठानत्वनिमित्तस्यात्मन्यसम्भवाच्च परचेत्ययोगान्नाध्यासलक्षणं बहिरुक्तमप्यात्मनि सम्भवतीति चोदयति ननु बहिरर्थ इत्यादिनोच्यत इत्यतः प्राक्तनेन ग्रन्थेन । नन्विहापि बहिरर्थवदगृहीतविशेषत्वमर्थत्वसामान्यादनुमीयतामिति नेत्याह नत्विह कारणान्तरायत्तेति । ननु स्वभावावभासेऽपि

,, १० संवेदनवदगृहीतविशेषांशोऽपि स्यादिति नेत्याह निरंशस्येति । मध्यमपरिमाणनिराकरणादणुरनन्तो वात्मा निरंश इति ।

---

* द्रष्टृदोष इति २ पु० । † करणगतदोषोवेति २ पु० ।

ननु निरंशोप्याकाशादिवन्न कार्त्स्न्येनावभासत इति तत्राह स्वयंज्यो- १४ १०
तिष इति । यावत्सत्त्वमवभासभावादित्यर्थः । कुतः । अत्रायं पुरुषः स्वयंज्योति-
रात्मैवास्य ज्योतिरित्यादिश्रुतेः । ननु ज्योतिरिति प्रकाशगुणमात्रं नाभिधीयते
आत्मनो गुणत्वप्रसङ्गात् अतः प्रकाशगुणवद् द्रव्यं ज्योतिरिति जन्यज्ञाने-
नापि प्रकाशेनात्मा प्रकाशगुण इति ज्योतिरात्मेति न विरुध्यते । नैतत्सा-
रम् । सर्वभावानामन्यनिमित्तप्रकाशसंसर्गित्वादात्मन्यपि तत्प्रसङ्गनिराकर-
णाय स्वयंज्योतिरितिविशेषणोपपत्तेः आत्मैवास्य ज्योतिरिति चैवकारात् ।
ननु कारकान्तरानपेक्षतया स्वयमेव स्वात्मनि ज्ञानं जनयतीति स्वयमिति
विशेषणं किं न स्यात् । न । ज्योतिष्ट्वस्यैव * विशेष्यत्वात्कारकत्वस्य विशे-
ष्यतया ऽप्रतिभासात् ।

किञ्च । ज्ञानजन्मप्रयुक्तत्वात् कारकापेक्षायास्तदभावे ऽपेक्षैव नास्ती-
ति । ननु ज्ञानप्रयुक्तं जन्मापि विद्यते । न । प्रकाशगुणत्वप्रयुक्तमेव द्रव्यजन्म
व्यतिरेके ह्यद्रव्योपाधौ जन्माभावस्य प्रदीपादौ दृष्टत्वादत्रापि ज्योतिःशब्दा-
दात्मनि प्रकाशगुणस्य जन्माभावनिश्चयात् । न चान्तःकरणेपि प्रकाशगुणोदयो
ज्ञानपरिणामः स्वभावत एव प्रकाशगुणवद्द्रव्यस्यान्तःकरणस्यैव विशेषपरि-
णामस्य ज्ञानत्वाभ्युगमात् । नच ज्ञानमपि क्वचिज्जन्मवद्दृष्टम् । दृष्टमन्तःकरण
इति चेन्न ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्तस्य चात्माश्रयत्वादन्तःकरणपरिणामे
ज्ञानत्वोपचारात् । नच ज्ञानमात्माश्रयं द्रव्यमिति युक्तम् तस्यैव प्रकाशगुण-
त्वेना † ऽऽत्मनो ज्योतिष्ट्वहानात् । जडप्रकाशगुणो न जन्यश्चित्प्रकाशगुणो जन्य
इति चेत् न । प्रकाशत्वप्रयुक्तत्वात्स्वद्रव्योपाधौ जन्माभावस्य दर्पणादौ विद्य-
मानप्रकाशस्यैव तिरोधाननिराकरणं क्रियते प्रदीपादिषु तु द्रव्यमेव जायते
न प्रकाशगुणः । प्रज्ञानघनशब्दाच्च चैतन्यज्योतिरात्मा न जडज्योतिरिति
गम्यते विज्ञानमानन्दं प्रज्ञानमानन्दं ‡ ब्रह्मेत्यादिवचनाच्च ज्ञानमिति ज्ञातृ-
त्वमुच्यते न भावार्थ इति चेन्न । § भावार्थे प्रसिद्धविरोधात् शब्दस्य । किञ्च ।
प्रतिक्षणं प्रकाशगुणकल्पनाद्वरमेकस्यैव गुणस्य स्थायित्वकल्पनम् । आत्मनि
प्रकाशगुणव्यतिरेकाभावाच्च नागन्तुकत्वे प्रमाणमिति ।

---

* विशेष्यत्वात्तत्र कारकत्वस्येति २ पु॰ । † आत्मनः स्वयंज्योतिषत्त्वेति ३ पु॰ ।
‡ आनन्दमिति पुनर्नास्ति २ पु॰ । § भावार्थ इति १ पु॰ ।

१४ १० नन्वाऽऽत्मन्यगृह्यमाणविशेषत्वमनुभवसिद्धमिति चोदयति ननु ब्रह्म स्वरूपमिति । तर्हि शुक्तिकायामिव ब्रह्मण्येवानवभासविपर्ययौ स्यातां न जीव इत्याह न तदनवभासनादिति । ननु कार्यकारणभावहीनयोर्द्रव्ययोः सामानाधिकरण्यमेकद्रव्यनिष्ठं सोऽयं देवदत्त इतिवदऽतो द्रव्यैकत्वाज्जीवगतावेवानवभासविपर्ययाविति * चोदयति ननु न ब्रह्मणोऽन्य इति। तर्हि ज्ञानप्रकाशविरोधादाश्रयविषयभेदाभावाच्च नाज्ञानता ब्रह्मण इत्याह एवं तर्हीति। तत्राद्वितीयाधिष्ठानब्रह्मात्मनि प्रमाणस्य चैतन्यस्याविद्याकारणदोषसंसर्गं प्रथमं दर्शयति उच्यते विद्यात एवेति । प्रत्यक्षानुमानार्थापत्ति † प्रदर्शिताऽज्ञानस्य

,, ११ श्रुतितदर्थापत्तिभ्यां प्रदर्शनं क्रियते श्रुतिस्तावदिति। सुषुप्ते मिथ्याज्ञानाभावात्तत्संस्कारस्य ‡ चाऽप्रतिबन्धकत्वात् कादाचित्कग्रहणाभावस्य च स्वतःसिद्धग्रहणविरोधित्वाभावात्स्वरूपचैतन्येनैव ब्रह्मस्वरूपावभासे प्राप्ते तदवभासप्रतिबन्धनिमित्तमनृतं दर्शयति अनृतेन हि प्रत्यूढाः त इमे सत्याः कामा अनृतापिधाना इति । ततश्च मिथ्याज्ञानतत्संस्काराग्रहणकर्मभ्यो व्यतिरिक्तमनवभासनिमित्तमनृतं मिथ्यावस्तु सिद्धम् । अनीशया शोचति मुह्यमान इति स्वभावसिद्धेश्वरस्यानीश्वरत्वं तद्भावाप्रतिपत्तिरेव वस्तुनो ऽनपायात्तत्श्चेश्वरभावाप्रतिपत्तेः शोकस्य च निमित्तं मोहं दर्शयति । आदिशब्दान्न तं विदाथ य इमा जजानान्यत् § युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरन्तीति । नीहारं तमोऽज्ञानमित्यनर्थान्तरम् तेन प्रावृतत्वमेव जीवानां ब्रह्मापरिज्ञाने जल्प्यत्वाद्यध्यासे च निमित्तं दर्शयति । तथा ऽविद्यायामन्तरे वर्तमाना नान्यच्छ्रेयो ‖ वेदयन्त इति श्रेयोरूपब्रह्मापरिज्ञाने क्रियाकारकाद्यध्यासे च निमित्तभूतामविद्यां दर्शयन्तीत्याद्याः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्तीत्याद्याः स्मृतयोऽपि द्रष्टव्याः ।

अर्थापत्तिरपि ब्रह्मज्ञानाद्बन्धनिवृत्तिः श्रूयमाणा ब्रह्मणि प्रागनवबोधोऽध्याससम्बन्धहेतुरस्तीति कल्पयतीति फलश्रुत्यनुपपत्तिरथवा द्रष्टव्य इत्यादिदर्शनविधानानुपपत्तिर्वा प्रागनवगममन्तरेणेति जीवस्य ब्रह्मस्वरूपानवभा-

---

* नोदयतीति १ पु० । † प्रदर्शितस्याज्ञानस्येति २ पु० ।
‡ चाप्रतिबन्धकत्वादिति १, २ पु० । § युष्माकमनन्तरं बभूवेति ३ पु० ।
‖ वेदयन्ते प्रमूढा इतीति २ पु० उपकल्पितम् ।

सनिमित्तं जीवाश्रयाध्याससम्बन्धहेतुरज्ञानदोषो विद्यत इत्युक्तम् । अथ च साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यत इति न तस्य प्रमाणवेद्यत्वप्रसङ्ग इति । तत्र चोदयति ननु न जीवो ब्रह्मणोऽन्य इति । किमत्र १४ जीवब्रह्मणोरेकत्वात्पर्यनुयुज्यते । किमेकत्वादाश्रयविषयभेदानुपपत्तिः किं वा चित्स्वभावस्याविद्याश्रयत्वविरोधो ब्रह्मणो वा सर्वज्ञत्वादिहानिरिति । न तावदज्ञानमाश्रयविषयभेदापेक्षं किन्त्वेकस्मिन्नेव वस्तुन्याश्रयत्वमावरणञ्चेति कृत्यद्वयं सम्पादयति स्वाश्रयापवरकप्रदेशे कृत्यद्वयसम्पादितमोवदऽक्रियात्मकत्वादावरणत्वाच्च । नहि तमो वस्तुद्वयापेक्षमवभासते अज्ञानमिति च द्वयापेक्षज्ञानपर्युदासेनाभिधानात् द्वयसापेक्षवदवभासते । यथास्थितिरगमनशब्देनाभिधीयमाना कस्य किंविषयमगमनमिति कर्म्मसापेक्षवद्भाति तद्वत्तमोवद्वा स्वाश्रयावरणमज्ञानं स्वाश्रयैकत्वेन न विरुध्यते । नापि स्वाश्रयचित्प्रकाशेन विरुध्यतेऽज्ञानम् स्वावभासकेन संवेदनेन चित्प्रकाशेनाज्ञानस्याविरुद्धत्वात् । साक्षिचैतन्यस्य चाज्ञानावभासकत्वादतो न चिदाश्रयत्वविरोधः ।

किञ्च । अन्यज्ञानेनात्मन्यवस्थाचये ऽवभासमान एव स्वपरविषयज्ञानाश्रयत्वं * सर्वैरेवोपगन्तव्यमिति नावभासमाने अज्ञानाश्रयत्वविरोधः । नच प्रकाशमात्रमज्ञानविरोधि स्वज्ञानेऽभावात् । नच स्वयम्प्रकाशमाने ज्ञानसंसर्गविरोधः क्वचिद्दृष्टः विषयाणां परप्रकाश्यानामेव तत्संसर्गविरोधात् । संवेदनस्यात्मस्वरूपत्वादेव तदाश्रयाज्ञानोपगमान्न तदुदाहरणम् । अथ ब्रह्मणः † सर्वज्ञत्वविरोधादैक्ये सति नाज्ञानमुपपद्यत इति न जीवाश्रयत्वोपगमात् । नन्वैक्यमुक्तम् । सत्यम् । सत्यप्यैक्ये प्रतिबिम्बात्मन्यध्यस्तश्यामत्वादेर्बिम्बेऽदर्शनात् अवदाततायाश्चाविरोधदर्शनादेवं सर्वज्ञत्वाविद्याश्रयत्वयोः सत्यप्यैक्ये विरोधात् । तस्मान्नैक्यमविद्याश्रयत्वेन विरुध्यते किंत्वविद्यामेवोपपादयतीत्याह वाढमत एवार्यादिति । ऐक्ये स्वयंप्रकाशत्वे सर्वज्ञत्वे च सत्येवानवभासदर्शनादाच्छादिका विद्या कल्प्यते अन्यथा भेदजाड्यकिंचिज्ज्ञत्वे ग्रहणाभावमात्रमेव स्यात् ततश्च तमोनूननीहाराज्ञानावृतत्वादिशब्दा अनवभासाध्यासनिमित्तभावरूपाज्ञानप्रतिपादका बाध्येरन्निति ।

* सर्वैरेवोपगन्तव्यमिति १ पु० । † सर्वज्ञत्वविरोधादैक्ये इति १ पु० ।

नन्वेकद्रव्यत्वे सति जीवब्रह्मविभागः किंनिबन्धनो यतः सर्वज्ञत्वाविद्याश्रयत्वे व्यवस्थाप्येते इत्यन्तःकरणावच्छेदात्कश्चिदिदं वक्ति अन्यस्त्वतिरेकात् अपरस्तु स्वभावादेवांशांशिभावात् । तत् सर्वं व्यावर्त्तयति अतो

१५ १ ऽनादिसिद्धाविद्यावच्छिन्नेति । आत्मावरणमात्माज्ञानमेव जीवब्रह्मविभागाद्यध्यासोपादानं यतो ऽतो जीवावच्छेदनिमित्तमज्ञानमित्यवच्छेदस्यापि प्रातिभासिकाध्यासस्य तदुपादानत्वात् सत्यतो निरवयवस्य द्वैधीभावायोगात्कर्तृत्वभोक्तृत्वदोषसंयोगानां बीजाङ्कुरवदनादिप्रवाहस्य दर्शितत्वात्तदुपादानमप्यज्ञानमनादीत्याह अनादिसिद्धेति । अनादिजीवविभागाध्यासप्रवाहस्यानाद्यऽविद्यैव कारणं नान्तःकरणादीत्याह अविद्यावच्छिन्नेति ।

नचान्तःकरणमवच्छेदकमर्थतो विदारणाभावादवच्छेदस्य विभ्रममात्रत्वादज्ञानस्यैव तदुपादानत्वादन्तःकरणस्य च सम्यग्ज्ञाननि * रस्यतयाऽविद्याध्यासत्वात् स्वकारणावच्छिन्नस्यैवावच्छेदकत्वसंभवात् । सत्यत्वेपि सादेरनाद्यवच्छेदोपाधित्वाभावात्सुषुप्तादौ चान्तःकरणाभावादनवच्छेदप्रसङ्गात् । तदापि सूक्ष्मावस्थमन्तःकरणमवच्छेदकमिति चेत् । किं तावन्निरवयवत्वापत्तिः सूक्ष्मता सावयवस्यावयवाभावे स्वरूपनाशात् । अथा † वयवापचयमात्रं सूक्ष्मता । न । अवस्थितावयविनो अकार्यत्वप्रसङ्गात् । कारणात्मना स्थितिरिति चेत् । किं कारणमेव ‡ स्थितमित्यर्थः कार्यमपीति वा । पूर्वस्मिन्नन्तःकरणाभावात् । उत्तरस्मिन् स्थित्यवस्थातो न विशेषः । तस्मात्कार्यसंस्कारविशिष्टशक्तिमत्कारणावस्थानमेव सूक्ष्मतापत्तिः अतो नान्तःकरणमवच्छेदकमस्ति । तस्मात् क्लृप्ताविद्यासामर्थ्यादेव जीवब्रह्मविभागसिद्धौ नातिरेककल्पनावकाशः । जीवस्य ब्रह्मण्यविद्येत्यविद्यापूर्वमेव विभागमपेक्षत इति चेत् । न । कस्य कस्मादतिरेक इत्यतिरेकस्यापि विभागपुरःसरत्वप्रतीतेः । यथा भेदाधीनोपि धर्म्मिप्रतियोगिभावो भेदेनोपरज्यते । कस्य कस्माद्भेद इत्येवमतिरेकाधीनोपि जीवब्रह्मभावस्तस्मिन्नुपरज्यते । जीवाद् ब्रह्मणोतिरेक इति चेदऽविद्यायामपि तुल्यमेतत् निरंशत्वान्नांशांशिभावेन भेदः संभवति । तस्मादऽविद्यैव भेदाध्यासनिमित्तमिति ।

---

* निरस्यतयेति पाठस्य सर्वत्र सत्वेऽपि निरास्यतयेति तु युक्तं मन्यामहे ।

† अवयवापायमात्रमिति २, ३ पु० ।

‡ अवशब्दोऽधिकः ३ पु० ।

नन्वविद्या किंसंबन्धिनी भेदनिमित्तम् । ननु दर्पणादिद्रव्यं वा किंसंबन्धि बिम्बभेदनिमित्तम् । मुखमात्रसंबन्धीति चेत् इहापि चेत्स्वरूपमात्रसंबन्ध्यऽज्ञानं तत्र जीवब्रह्मव्यवहारभेदं प्रवर्त्तयति । कथं पुनः स्वरूपमात्रसंबन्धिनो ऽज्ञानस्य ब्रह्मस्वरूपं परिहृत्य जीवविभागैकपक्षपातिता दर्पणघटादेर्मुखाकाशभेदे हेतुतया मुखादिसंसर्गिणोपि बिम्बाकाशौ परिहृत्य प्रतिबिम्बघटाकाशादिपक्षपातित्ववदिति वदामः ।

ननु किमाश्रयेयमविद्या । न तावदन्तःकरणविशिष्टस्वरूपाश्रया प्रमाणाभावात् । नन्वहमज्ञ इति प्रतिभास एव विशिष्टाश्रयत्वे प्रमाणम् नाहमनुभवामीत्यनुभवस्यापि चैतन्यप्रकाशस्य विशिष्टाश्रयत्वप्रसङ्गात् । ननु यथा अयो दहतीति दग्धृत्वायसोरेकाग्निसंबन्धात्परस्परसंबन्धावभासः तथानुभवान्तःकरणयोरेकात्मसंबन्धात्तथावभासो नान्तःकरणस्यानुभवाश्रयत्वादिति चेत् एवमज्ञानान्तःकरणयोरेकात्मसंबन्धादहमज्ञ इत्यवभासो नान्तःकरणस्याज्ञानसंबन्धादिति तुल्यम् । प्रतीतेरन्यथासिद्धौ परस्परसंबन्धकल्पनायोगादात्मनि अविद्यासंबन्धस्य सुषुप्तेपि संप्रतिपन्नत्वाच्च । अथ स्वरूपमात्राश्रयत्वानुपपत्तेर्विशिष्टाश्रयत्वं कल्प्यत इति चेत् । न । विशिष्टेपि स्वरूपसंबन्धस्य विद्यमानत्वाज्जडस्य चाज्ञानाश्रयत्वे भ्रान्तिसम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसङ्गात् । ननु स्वरूपेपि ब्रह्मण्यनुपपत्तिस्तुल्या । सत्यम् । अनुपपन्नद्वयाश्रयत्वकल्पनाद्वरं संप्रतिपन्नस्वरूपाश्रयत्वोपादानम् मोक्षावस्थासंबन्धिन एव संबन्धाश्रयत्वात् ।

अत्र कश्चिदन्तःकरणस्यैवाज्ञानमिति जल्पति । स वक्तव्यः कि*मात्मा सर्वज्ञः किंचिज्ज्ञो वेति । किंचिज्ज्ञत्वे कदाचित्किंचिन्न जानातीति विषयानवबोधस्त्वयैवात्मनो दर्शितः । अथाग्रहणमिथ्याज्ञानयोरात्माश्रयत्वेपि भावरूपाज्ञानमन्तःकरणाश्रयमिति । किं तत् । ज्ञानादन्यच्चेदऽज्ञानम् काचकामलादीनामप्यज्ञानत्वान्न विवादः । अथ ज्ञानविरोधीति । न । भिन्नाश्रययोर्ज्ञानाज्ञानयोरेकविषययोरपि विरोधित्वादर्शनात् । करणाश्रयमज्ञानं कर्त्राश्रयज्ञानेन विरुध्यत इति चेत् । न । प्रमाणाभावात् । पुरुषा-

---

* किमात्मा सदा सर्वज्ञ इति १ पु० ।

न्तरसुषुप्तौ च तदीयेनान्तःकरणेन लीयमानेन करणभूतेन तन्निमित्तकर्मानु-
मानेपि तदीयान्तःकरणाज्ञाननिवृत्त्यदर्शनात् भ्रान्तिनिमित्तदोषत्वात्काचा-
दिवत्करणाश्रयमज्ञानमिति चेन्न चक्षुरादावपि प्रसङ्गात् । सादित्वात्तेषाम-
नाद्यज्ञानाश्रयत्वानुपपत्तिरिति चेत् अन्तःकरणेपि तुल्यम् । सत्कार्यवादाश्र-
यणान्न साद्यन्तःकरणमिति चेत् । चक्षुरादावपि तुल्यम् । अतो न तद-
नाद्यज्ञानाश्रयमिति । अनृतनीहारादिशब्दैश्च प्राप्तज्ञानानामग्रहणवतां चेत-
नानामेवावृतत्वाभिधानान्नान्तःकरणाश्रयमज्ञानं किंतु चैतन्याश्रय * मित्यलम-

१५ ५ तिविस्तरेण । तदेतदाह अविद्यावच्छिन्नानन्तर्जीवेति ।

न्यायः प्रदर्शितः । श्रुतिस्तु अन्यद् युष्माकमन्तरं बभूव नीहारेण
प्रावृता इति व्यवधायकमज्ञानं दर्शयति । विभेदजनके ज्ञाने नाशमात्य-
न्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीति स्मृतिः । ननु
ब्रह्मव्यतिरिक्तमनादिवस्तु नास्तीति तत्राह तथाच स्मृतिरिति । अत
इत्युपसंहारः स्पष्टार्थः ।

स्वयंप्रकाशस्याविद्याश्रयत्वमुपपन्नमित्युक्तमिदानीं प्रकाशमानस्यावि-
द्याविषयभावो नोपपद्यत इत्याक्षिपति ननु प्रमाणविरोध इति । ननु त्वदु-
क्तमर्थं न जानामीति प्रतिभासमानमेवाज्ञानस्य व्यावर्त्तकमवभासते । ननु
तत्र विशेषाकारस्यानवगतस्य व्यावर्त्तकता । न । अनवभासमानस्य व्यावर्त्तक-
तया प्रतिभासानुपपत्तेः । नन्ववभासमानस्यापि तद्व्यावर्त्तकत्वमनुपपन्नमेव ।
न । अज्ञानसंबन्धस्य प्रतिभासमात्रशरीरत्वादनुपपत्तेरलङ्कारत्वात्प्रतिभासस्तु
विद्यत एव तत्र कथं प्रतीयमानस्याविद्याविषयत्वानुपपत्तिरित्याक्षिपति किं
तत्प्रमाणमिति । निरंशस्येति परिहारः । संविदभेदो ऽपरोक्षप्रकाशमानता
नाम । शरीराद्भेदश्च स्वयंज्योतिरात्मप्रकाशेनाभिन्नस्ततन्त्रो वापरोक्ष एव
तथापि न प्रकाशत इति † सिद्धान्ती परिहरति ननु भोक्तुरिति । ननु न
भोक्तेत्यादिः स्पष्टार्थः ।

पदार्थज्ञानमेव भेदज्ञानमतोऽहमित्यात्मपदार्थज्ञानमेव भेदेपि प्रत्य-
क्षमिति मीमांसकमन्यश्चोदयति कथं पुनर्भोक्तेति । संसर्गाध्यासो हि भेदा-

,, १३ नवगमनिमित्तमिति सर्वत्र व्याप्तमिति परिहरति मनुष्योऽहमितीति । पदार्थ-

* इत्यलमतिप्रसङ्गेनेति ३ पु० । † इति परिहरति सिद्धान्तीति ३ पु० ।

प्रत्यक्षेणैव भेदेपि प्रत्यक्षे सामानाधिकरण्यं गौणावभास इति चोदयित्वा परिहरति ननु गौण इत्यादिना । आह गौणवादी नन्विहमिति यदीति । १५।१३।१५ ननु प्रत्यक्षावभासं बाधित्वा ऽऽगमानुमानाभ्यामेव व्यतिरेको गृह्यतामिति नेत्याहागमानुमानयोरपीति । ननु मिथ्यात्वात्प्रत्यक्षावभासस्य द्विचन्द्राव-भासस्येव ताभ्यामेव बाध इति चोदयति मिथ्यात्वानस्येति । यथावि-चारपुरःसरमेव प्रत्यक्षावभासमप्यनुमानादिना झटिति बाधितमुच्छिन्नव्यहारं भवति तत्र तथा भवतु यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचि-न्तया बाधनिश्चयः तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिरिति मत्वाह कुतस्तर्हीत्यादिना उच्यत इत्यतः प्राक्तनेन ग्रन्थेन । स्पष्टार्थो ग्रन्थः ।

किमर्थतो व्यतिरिक्तात्मविषयो ऽहङ्कार उच्यते किं वा प्रतिभासतः । अर्थतश्चेत्तत्राह यद्यपि* देहादिव्यतिरिक्तेति । व्यतिरेकप्रतिभास एव अध्यासविरोधितया सामानाधिकरण्यस्य गौणत्वमावहति नत्वर्थमात्रमिति भावः । ननु सामान्येन गृहीतस्य विशेषाग्रहणादन्यसंसर्गावभासो भवति आत्मा तु विशेषरूपेण गृहीतः कथं तत्राध्यासः तत्राह † दृश्यते हीति । अथ प्रतिभासत एवाहंप्रत्ययो विविक्तात्मविषय इति शङ्कते अथ पुनरेका- १६ १ न्तत इति । परिहरति ‡ ततस्तद्भाव इति । यौक्तिकज्ञानसहकृतेनाहंप्रत्यये-नात्मनि विविक्ते प्रतिपन्ने पुनः सामानाधिकरण्यं गौणमेव तत्सामान्यात्पूर्व-मपि गौणमेवेत्यभिप्रेत्याह जिज्ञासोत्तरकालं तर्हीति । विचारेणापि नाहं-प्रत्ययस्य व्यतिरिक्तात्मविषयत्वमापादितं किं तु सर्वदा स्वरूपमात्रविषयोऽहं-प्रत्ययो यौक्तिकज्ञानलब्धस्तु व्यतिरेको ऽतस्तस्यानुसंधाने पूर्ववदध्यास एवेति परिहरति न युक्त इति । तत्रापि नाध्यास इति चोद्यम् अनुभववि-रोध इति परिहारः । अकारस्य व्यतिरेकेपि हस्वाद्व्यतिरेकादध्यास इति चोदयति नन्वनुभव इति । अन्यतरव्यतिरेके द्वयोरेकत्वादितरस्येतरेतरव्य-तिरेकः सिद्ध्यतीत्याह तन्नेति । ननु § महदेतदित्यादिचोद्यपरिहारौ स्पष्टौ । ,, ९।१०

---

* देहव्यतिरिक्त इति १ पु० ।

† दृश्यते चेतीति २ पु० मूलसंमतः ।

‡ ततस्तत्सद्भाव इति ३ पु० मूलसंमतः ।

§ ननु महदेतदिन्द्रजालमितीति ३ पु० ।

किं च विवेकानन्तरमध्यासोऽहंप्रत्ययमात्रेण विरुध्यत इत्युच्यते किंवा

१६ १२ यौक्तिकज्ञानेन । न तावदहंप्रत्ययमात्रेणेत्याह तथाह्ययंप्रत्ययस्येत्यादि *-ना । ननु एवंमात्रविषयोऽपि युक्तिज्ञानसन्निधानाद्व्यतिरिक्तविषयोऽहंप्रत्यय इति नेत्याह अतो युक्त्या विषयविवेचनेऽपीति । नहि प्रत्यक्षज्ञानं ज्ञानान्तरसन्निधानात्स्वविषयादधिकविषयं भवतीति भावः । विचारजन्यज्ञानस्याननुसंधानाःदनुसंधानेऽपि परोक्षत्वान्नापरोक्षाध्यासः प्रागवस्थातो भिद्यत इत्युपसंहरति अतो न्यायत इति ।

ननु प्रत्यक्षे देहात्मैक्याध्यासे किमैक्यप्रत्ययमपबाध्यव्यतिरेके प्रमाणमुक्तमित्युच्यते युक्तिसहितागमानुमानाहंप्रत्ययैर्द्विचन्द्रबाधयैकत्ववद्व्यतिरेकः सिध्यतीत्युक्तं भवति तदेवं स्वयंज्योतिष इति दृष्टान्तानुवादेन दार्ष्टान्तिककथनपरो ग्रन्थः स्पष्टार्थः । स्वयंप्रकाशत्वेऽप्यविद्ययाऽगृह्यमाणविशेषत्वादात्मनोऽधिष्ठानयोग्यत्वकथनेन परत्रपरावभास इति लक्षणांशो दर्शितः । कारणत्रितयेऽप्यद्वितीयात्मावभासिचैतन्यप्रमाणतद्गताविद्याकारणदोषौ लब्धौ संस्कारमिदानीं लम्भयत्यनादित्वाच्चेति । नन्वध्यस्यमानाधिष्ठानविषयं कारणत्रितयजन्यमेकमेव ज्ञानं वक्तव्यं तदभावान्नाध्यास इत्याशङ्क्याह पृथग्भोक्तृविषयानुभवफलाभावादिति । आत्मचैतन्यमेवात्मानात्मसंभेदावभासिस्वरूपेणाजन्यत्वेऽपि विशिष्टविषयोपरक्ताकारेण जन्यते भ्रान्तित्वाच्च विषयविषयिणोरेकस्मिन् प्रत्यये संभेदावभासः संभवतीति कारणत्रितयजन्यमात्मन्यनात्मावभासिज्ञानमध्यासः सिद्ध इति ।

१७ २ कथं पुनरित्यादिभाष्यस्य तात्पर्यमाह कोऽयमध्यासो नामेति । किंवृत्तस्येति † पृष्टमेवानेनाऽऽक्षिप्तमपि मयेत्युभयत्रैवकारापि शब्दौ प्रयोक्तव्यौ ‡ । अध्यस्यमानेन समानेन्द्रियविज्ञानविषयत्वमेवाधिष्ठानस्य दृष्टम् इह तदभावान्नाध्याससंभव इत्याक्षेपग्रन्थार्थः । तत्रैकस्मिन्विज्ञाने द्वयोः संभिन्नतयावभास एवावभास एवापेक्ष्यते विषयतयावभास इति विशेषणायोगादिति मन्वानः

* ननु मरुरेतदिन्द्रजालमित्यादिचोद्येति २ पु०

† इत्यादीति ३ पु० ।

‡ पृष्टमेवाक्षिप्तमपीति १ पु० ।

परिहरति न तावदयमेकान्तेनाविषय इति । अस्मत्प्रत्ययशब्देनात्मविषयं ज्ञान- १७ ८
मुक्तमिति मन्वानश्चोदयति ननु विषयित्व इति । एकस्यां प्रत्यक्षदर्शनक्रिया-
यामेकस्यैव कर्तृस्थाने तदैव तद्विपरीतकर्मकारकस्थाने चावस्थानमनुपपन्न-
मिति भावः अस्तु तर्ह्यंशाभ्यां तद्भाव इति नेत्याह तत्कथमेकस्येति । तत्र
सर्वतो विप्रसृतस्य सवितृप्रकाशस्याकाशे विशेषाभिव्यक्तिनिमित्तदर्पणादिव-
दात्मचैतन्यस्य सविकल्पकतया स्फुटीकरणव्यवहारनिमित्तं भास्वरद्रव्य-
मात्मन्यध्यस्तमन्तःकरणमस्मत्प्रत्यय इत्याहा * स्मत्प्रत्ययाभिमितोहङ्कार
इति । नन्विदं रजतमितिवदध्यस्तत्वे ऽहमिति द्वैरूप्यावभासो वक्तव्य
इत्यत आह स चेदमनिदमिति । अयो दहतीति दग्धृत्वविशिष्टस्याग्नेरय-
सश्च द्वैरूप्यावभासवदहमुपल † भे इत्युपलब्धृत्वविशिष्टस्यात्मनो ऽन्तःकर-
णस्य चास्त्येव द्वैरूप्यावभासो ऽसाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्व-
न्तरविशिष्टमवभासत इति भावः । दुःखिप्रेमास्पदरूपेण परिणामितदागमा-
पायद्रष्टृरूपेणाहङ्कारविषयादिष्वनुस्यूतचैतन्यरूपेणाहमिति च व्यावृत्तरूपेण च
सर्वलोकसाक्षिकं द्वैरूप्यमित्याह सर्वलोकसाक्षिक इति ।

ननु विषयसंविद आश्रय आत्मा तत्राहं जानामीति संविदाश्रयत्वेना-
वभासमानोहङ्कारः कथमिदमंशः स्यादिति चोदयति ननु किमत्र वदितव्य- ,, १५
मिति । नन्वयो दहतीत्यादावयःपिण्डादिवदऽकर्तृत्वेपि दर्शनक्रियाश्रयको-
टिनिक्षिप्ततया ऽहङ्कारस्यावभासः सम्भवतीति पूर्ववादिनं सिद्धान्ती चोद-
यति कथमिति । अयःपिण्डव्यतिरेकेण वह्नेः ‡ दहनक्रियाश्रयत्वदर्शनवदह-
ङ्कारव्यतिरेकेणात्मनो ज्ञानक्रियाऽदर्शनादहम एवात्मत्वमित्युत्तरेण ग्रन्थेन
प्रतिपादयति ।

तत्र साङ्ख्यास्त्वचिदात्मन्यन्तःकरणे चिदाकारप्रतिविम्बावभासः § त-
थाविधविम्बान्तरपुरःसरः प्रतिविम्बत्वान्मुखप्रतिविम्बवदिति विम्बभूतमा-
त्मानमनुमिमते । नैयायिकवैशेषिकाश्चेच्छादयो गुणाः पृथिव्यादिमहाभूत-
द्रव्यव्यतिरिक्तस्यैव विशेषगुणास्तेष्वदृष्टत्वे सत्येकेन्द्रियग्राह्यतया विशेषगुण-
त्वात् भूतचतुष्टये ऽदृष्टगन्धवद्दिक्कालमनसां विशेषगुणहीनत्वात्परिशेषादि-

* अस्मत्प्रत्ययत्वाभिमत इति ३ पु· ।
‡ दहनादिक्रियेति ३ पु· ।
† उपलम्भे–इति पु· त्रयेऽपि पाठः ।
§ तथाविधविम्बपुरस्सर इति २ पु· ।

च्छादिगुणवद् द्रव्यमन्यदेवात्मेत्यनुमिमते । तथा संवेदनेषु विषयाकारप्रति-विम्बावभासः तथाविधविम्बसन्निधानपुरःसरो ऽतस्मिन् तदवभासत्वाद् दर्पणस्फटिकादिगतमुखरक्तत्वादिवदिति नित्यानुमेया विषया इति सौत्रा-

१७ १६ न्तिकाः कल्पयन्ति । तान्प्रत्याह प्रमातृप्रमेयप्रमितयस्तावदपरोक्षा इति ।

यदि साङ्ख्यादयः प्रत्यक्षसिद्धस्यैवात्मनोऽनुमानानि स्पष्टीकरणार्थानीति मन्येरन् तदा न कश्चिद्विरोधः । यदि नित्यानुमेयमात्मानमिच्छेयुः तदा विषयवदहमित्यपरोक्षावभासविरोधः । सौत्रान्तिकस्यापि यदि विषयानुमानज्ञाने साक्षाद्विषया एवावभासेरन् प्रत्यक्षेप्यवभासतां कस्तत्रापराधः इत्यनुमानज्ञाने विषयस्यैवावभासनादनैकान्तिको हेतुः । न चेदनुमानज्ञानेपि विम्बभूतविषयावभासः प्रतिज्ञानार्थस्य विम्बपुरत्वस्याप्रतिभासनात् अनुमानानुदय एव स्यात् अपरोक्षव्यवहारयोग्यविषयावभासविरुद्धं चानुमानमिति ।

अथ विज्ञानवादिनस्तु विज्ञानाभेदनिमित्त एव विषयस्यापरोक्षावभास इत्याहुः । तन्निराकरोति प्रमेयं कर्मत्वेनापरोक्षमिति । इदं पश्यामीत्यनुभवात् । नच विज्ञानाभेदादेवा* परोक्ष्यमवभासते बहिष्ठस्यापि रजतादेरापरोक्ष्यात् । तदपि† विज्ञानमिति चेन्न रजतवद्बाधाभावप्रसङ्गात् । तस्मादव्यवधानेन संविदुपाधिता ऽपरोक्षता विषयस्येति ।

तत्रात्मात्ममनःसंयोगजन्यप्रत्यक्षेणापरोक्ष इति वार्त्तिककारन्यायवैशेषिकानुसारिणः कल्पयन्ति । प्रमितिस्त्वात्मनि संयुक्तसमवायनिमित्तज्ञानान्तरादपरोक्षेति न्यायवैशेषिकौ । प्रमेयगता प्रमितिः संयुक्ततादात्म्याज्ज्ञानान्तरेणापरोक्षेति वार्त्तिककारीयाः । तान्प्रत्याह प्रमातृप्रमिती पुनरपरोक्षे‡ एव केवलमिति ।

न तावदात्मविषयं§ प्रत्यक्षं ज्ञानान्तरं मनोजन्यमिति प्रमाणमस्ति । सति मनसि आत्मदर्शनादसति सुषुप्ते चादर्शनादन्वयव्यतिरेकौ प्रमाणमिति चेत् न । विषयानुभवेनैवान्यथासिद्धत्वात्‖ विषयानुभवसम्बन्धादेव विषयवदात्मसिद्धावात्मनि ज्ञानान्तरं परिकल्प्य मनसोन्वयव्यतिरेककल्पनायोगात् तस्माद्विषयत्वमन्तरेणात्माऽपरोक्ष एव ।

---

* अपरोक्षमिति २ पु० । † विशब्दो नास्ति २ पु० । ‡ अपरोक्ष एवेति १ पु० ।
§ ज्ञानान्तरं प्रत्यक्षमिति ३ पु० । ‖ अन्यथासिद्धत्वादिति १ पु० ।

नच संयुक्तसमवायादात्मनि विषये वानुभवस्य ज्ञानान्तरविषयतया परोक्षता । प्रत्यक्षस्य वर्तमानविषयापेक्षत्वेन युगपत्फलद्वयावस्थानप्रसङ्गात् । संयुक्तसम्बन्धादनुभवावभासे तद्गतपरिमाण * रसादीनां तेनैव ज्ञानेनापरोक्षताप्रसङ्गात् अनुभवस्य च स्वसत्तायां प्रकाशव्यतिरेकादर्शनाच्च † ज्ञानान्तरागम्यतासिद्धिः । नचान्त्यव्यापाराद्विषयानुभवजन्म सम्भवति सर्वगतस्य कुठारादिवत् परिस्पन्दाभावात् परिणामफलस्य च घटादिवत् क्रियैकाश्रयत्वात्संविदाश्रयत्वे विषयस्यैव चेतनत्वप्रसङ्गात् । नच तज्जननव्यापारवत्त्वादात्मनश्चेतनता मनआदीनामपि प्रसङ्गात् विषयाश्रयत्वे चानुभवस्य मयेदं विदितमिति सम्बन्धावभासः स्वात्मनि ज्ञानक्रियानुमानं च न स्यादनुभवस्यात्मसम्बन्धाभावात् । तस्माद् द्वयोर्न कर्मतया ऽपरोक्षता ।

ननूभयोः स्वयम्प्रकाशत्वकल्पना न युक्ता अन्यतरस्य स्वयम्प्रकाशत्वे आत्मैव स्वयंप्रकाश इति चेन्नेत्याह प्रमितिरनुभव इति । अथवा । हानोपादानोपेक्षाः प्रमाणफलमिति केचित्तत्राह प्रमितिरनुभव इति । नहि हानादीनां इतरेतरव्यभिचारिणां मानफलता युक्ता ऽव्यभिचारिण्यनुभवे सतीत्यर्थः । १७ १७

ननु संवेदनमेवार्थसारूप्येण प्रमाणं प्रमीयते ऽनेनेति व्युत्पत्तेरर्थोपलब्ध्यात्मना तदेव प्रमाणफलमिति सुगतमतानुसारिणस्तद्व्यावर्त्तयति प्रमाणं त्विति । प्रमाणं तु प्रमातृव्यापारश्चक्षुराद्यसन्निकर्ष एवेति ‡ प्राभाकराः । § नन्वहमिदं जानामीत्यात्मनात्मविषयावनुभवौ भेदेन प्रत्यक्षसिद्धाविति नेत्याह नचाहमिदं जानामीति ।

ननु यदवभासते तज्ज्ञानकर्मतयैवावभासते इति विषयेषु नियमादात्माप्यवभासते चेत्कर्मतयैव ‖ नाश्रयमात्रतयेति चोदयति ननु नायं विषयानुभवनिमित्त इति । ननु प्रत्यक्षज्ञानस्य विषयजन्यत्वात्कारकतापि विषयस्य वक्तव्या तत्र कथमेकस्यां क्रियायामेकस्यैव कर्तृत्वेन विरुद्धरूपद्वयान्वयः कर्तुश्च गुणभावात्कर्मणश्च प्राधान्यादेकस्य रूपद्वये वैरूप्यप्रसङ्गश्चेति ,, २१

---

* रसादीनां च तेनैवेति २ पु ।

† ज्ञानान्तरागम्यतासिद्धेर्नचात्मव्यापाराद्विषयेऽनुभवफलजन्मेति २ पु० ।

‡ प्रभाकराः-इति ३ पु० ।

§ नन्विदमहं जानामीति ३ पु० ।

‖ नाश्रयतया चोदयतीति १ पु०, नाश्रयतयेति चोदयतीति २ पु० ।

१७ २२ तथाह तस्मिंश्च द्रव्यरूपत्वेनेति । तत्र सामान्यांशस्यात्मानात्मसाधारण्या-दात्मत्वायोगात् । विशेषांशस्य निरंशत्वान्न कर्तृकर्मव्यवस्थेति परिहरति *नचैतद्युक्तमिति । निरवयवस्य युगपत्कार्यद्वयपरिणामायोगाच्चेत्याह अपरि-णामित्वादिति ।

किञ्च । ग्राहकरूपस्यापि विषयतया सिद्धिरस्ति † वा नवा । नचेत्स्वयं-

१८ १ प्रकाशत्वसंविदाश्रयत्वसिद्धोरनभ्युपगमादऽसिद्धिप्रसङ्गः । कर्मतया सिद्धि-श्चेत्तत्राह प्रमेयस्य चेति । तस्मात्संविद्गुणादेव चितयसिद्धौ संविदाश्रय-पक्षपातितया ऽहमः सिद्धेर्नेदमंशोहङ्कार इत्युपसंहरति तस्मान्नीलादिज्ञा-नफलमिति ।

अहङ्कारस्यात्मव्यतिरिक्तत्वं साधयितुमात्मनः स्वयंप्रकाशत्वसाध-नाय विकल्पयति तच्चेदं भवानिति । उत सोपि अनुभवोपीत्यर्थः । तत्रात्मा

„ ५ चित्स्वभावो ऽनुभवो जड़प्रकाश इति पक्षो नोपपद्यते इत्याह तत्र न ताव-दिति । नन्वप्रकाशमानमेव ‡ प्रमाणफलं चक्षुरादिवद्विषयमवभासयेदिति कुतो विश्वस्यानवभासो न विषयप्रकाशजननेन चक्षुषः प्रकाशकत्वात्संविद्विलक्ष-णयात् संवेदनं तु स्वयंप्रकाश एव न प्रकाशान्तरहेतुःअतश्चक्षुरादिवैलक्षण्या-त्प्रदीपवदवभासमान एवानुभवोऽर्थं प्रकाशयति न च प्रदीपालोकस्यार्थानुभव-जननेनैव चक्षुरादिवदर्थस्य प्रकाशकता किन्तु पृथगेव । तथाहि । ज्ञानप्रका-श्यत्वादज्ञानविरोधिनो ऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधितया प्रसिद्धम् तदव्यवधानेन आलोकेन क्रियते न तदुभयं करोति चक्षुरज्ञानत्वादनालोक-त्वाच्च । तस्मादनुभवः सजातीयप्रकाशान्तरनिरपेक्षः प्रकाशमान एव विषये प्रकाशादिव्यवहारनिमित्तं भवितुमर्हत्यव्यवधानेन विषये प्रकाशादिव्यवहार-निमित्तत्वात्प्रदीपालोकवत् । नच चक्षुषा सजातीयप्रकाशेन प्रदीपस्यालोकेनेव घटस्य प्रकाश्यता स्वयमेव प्रकाशगुणत्वात् । तद्विषयज्ञानप्रकाशं जनयति चक्षु-रिति चेत्तथापि विजातीयज्ञानेनैव प्रदीपस्य प्रकाश्यतेति न सजातीयालोका-पेक्षा । तस्माद्व्यवहितप्रदीपस्येवानुभवस्याप्यप्रकाशमानत्वे प्रदीपप्रकाश्यस्येव विश्वस्यानवभाप्रसङ्ग इति ।

* नैतद्युक्तमिति २ पु० । † वाशब्दो नास्ति २ पु० । ‡ प्रमाणेति नास्ति २ पु०

ननु प्रमातृचैतन्यमेव जडानुभवबलादात्मानं विषयं चावभासयतीति चोदयति मैवम् प्रमाता चेतन इति । तत्र यदि चैतन्यस्य विषयोपराग- १८ ६ हेतुरनुभवः पराभ्युपगतबुद्धिपरिणामवदिष्यते तद्युज्यते चिदात्मप्रकाशस्य तु जडानुभवाधीनता ऽनुपपन्नेत्याह तन्न स्वयंप्रकाशचैतन्यस्वभावोपि सन्निति । चेतयतिक्रियापि पूर्वानुभवफलवज्जडरूपानुभवफलं चेतनस्यापि प्रदीपस्थानीय-त्वाच्चेतयतिक्रियानवस्थेति * दूषयति किञ्च प्रमाणफलेनेति । उभयचैतन्य-स्वभावपक्षे पुरुषद्वयवन्नान्योन्याधीनसिद्धिता नापि संविदात्मसम्बन्धावगम इत्याह द्वितीयेपि कल्प इति ।

ननु चिद्गुणमपि पुरुषान्तरसंवेदनं न पुरुषान्तरस्य स्वयंप्रकाशम् तथात्मा चैतन्यगुणोपि न स्वयं प्रकाशत इति शङ्कते अथ चैतन्यस्वभाव-त्वेपीति । परिहरति विशेषे हेतुर्वाच्य इति । अनुभवोपि तर्हि न स्वयंप्रकाशः स्यात्पुरुषान्तरसंवेदनवद्ऽव्यवधानान्नेति चेदात्मन्यपि तत्समानमिति भावः । किञ्चेति स्पष्टार्थः । अस्तु तर्हि जडात्मनः स्वयंप्रकाशानुभवाश्रय-तया सिद्धिरिति नेत्याह तृतीयेपीति । अयमर्थः । संवेदनं नाम गुणो द्रव्यं कर्म वा भवति । कर्मत्वे प्रकाशत्वफलत्वयोरनुपपत्तिर्द्रव्यत्वेप्यणुमध्यमान-न्तपरिमाणानाम् अणुपरिमाणत्वे विषयेपि तावन्मात्रावभासः स्यान्नहि खद्यो-तप्रकाशमात्र † संसृष्टस्य घटस्य सर्वात्मनावभासः । महापरिमाणत्वे तदाश्र-यतयात्मनोपि सर्वत्रावभासप्रसङ्गः । मध्यमपरिमाणत्वे सावयवत्वेनावयव-परतन्त्रता न स्यात् । गुणत्वे सति आत्मैव ‡ प्रकाशगुण इति प्रदीपवदात्मा स्वयंप्रकाशः स्यात् । स च गुणः स्वाश्रयोपाधौ न जायते प्रकाशगुणत्वा-दात्मन्यव्यभिचारादित्यादिप्रकाशगुणवदित्यात्मैव स्वयंप्रकाश इति तदे-तदाह अनिच्छतोप्यात्मैव चित्प्रकाश इति । ,, १९

ननु मध्यमपरिमाणमेव स्वावयवाश्रयं फलमस्तु आत्मपरतन्त्रता तु घटस्येव भूतलतन्त्रतेति नेत्याह न तदतिरिक्ततयाविधफलसद्भाव इति । प्रदीपेन प्रकाशितमितिवन्मयावगतमित्यनुभवादात्मैव चित्प्रकाशः । अन्यथा

* दर्शयतीति २, ३ पु० । † संस्पृष्टस्येति १ पु०, मात्रसंसृष्टस्येति २ पु० ।

‡ प्रकाशेति नास्ति २ पु० ।

काष्ठेन प्रकाशितमितिवदुपचारप्रसङ्गादिति भावः । प्रमाणान्तरापेक्षया पृच्छति

१८ १७ कथमिति । संवेदनस्य भेदावभासशून्यत्वादनुभवाधीनसिद्धिकस्य * च विषयवदनात्मत्वादेकः स्थाय्यात्मैवानुभव इत्याह प्रमाणजन्यश्चेदनुभव इति । सामान्यविशेषभेदकल्पनागौरवादात्मैक एवानुभव इत्याह सर्वानुभवानुगतं चेति । स्वगतभेदप्रतिभासशून्यतामेव प्रपञ्चयति नच नीलानुभव इति । ननु नीलसंवित्स्थितिकाले पीतसंविदो ऽभावात्स्थितिविनाशौ दृष्टौ धर्मभेदं कल्पयत इति चोद्यमुद्भाव्य परिहरति नन विनष्टाविनष्ट इत्यादिना । ननु साधनसन्निधानादुत्तरसंवेदनस्य जातत्वात् संविद्द्वययौगपद्यायोगात् विनष्टापूर्वसंविदिति चेन्नेतरेतराश्रयादित्याह † सा च जन्यत्व इति । सिद्धस्यैव संवेदनस्य विषयोपरागनिमित्तं साधनमितिकल्पनं लघीयः विषयोपरक्तसंविज्जन्मसाधनत्वकल्पनादिति भावः ।

सत्यपि संविदां स्वगतभेदे ऽतिसादृश्यात् ज्वालायामिव परोपाधिमन्तरेण भेदो न विभाव्यत इति सुगताः कल्पयन्ति तान्निराकरोति एतेनातिसादृश्यादिति । किञ्च । ज्ञानान्तरगम्यत्वे भेदस्यातिसादृश्याद्भिन्नेष्वभेदभ्रमजन्म स्यात्स्वयंप्रकाशस्य तु भेदः प्रकाशाभिन्न इति प्रकाशमानतैव युक्ते-

१९ १ त्याह नहि ‡ चिदात्मप्रकाशस्येति । नच यथा जीवस्येति स्पष्टार्थः । एकत्वेन पुष्कलप्रकाशस्याप्यविद्याप्रतिबन्धे प्रमाणमुक्तम् इहत्वप्रतिबद्धपुष्कलकारणत्वाद्भेदप्रकाशेन भवितव्यमित्याहाभिहितं तचेति । ननु संविदः सादृश्यप्रतिबद्धभेदावभासाः स्थायिप्रकाशबुद्धिवेद्यत्वाज्ज्वालावदित्यनुमातुं शक्यते § तत्राह नहि सामान्यतोदृष्टमिति । पूर्वापरैकरूपानुभवो भेदस्य च प्रकाशेन भवितव्यमित्यनुभवयुक्ती । कथं पुनरात्मचैतन्यस्य नित्यस्य विषयानुभवत्वमिति तदाह तस्माच्चित्स्वभाव एवेति ।

ननु स्वयंप्रकाशमानात्मचैतन्यस्य विषयानुभवत्वेपि विषयानुभवमेव

,, ६ निमित्तीकृत्याहमितिद्रष्टृऽपरामर्शादात्मैवाहङ्कारः संवृत्त इति चोदयति बाढमत एवेति । द्रष्टृरूपेण परामर्शस्य विषयानुभवो निमित्तम् । अन्यथा द्रष्टा-

---

* चो नास्ति ३ पु· । † आश्रयत्वादिति ३ पु· ।

‡ चित्प्रकाशस्येति २, ३ पु· । § इत्यत्राहेति २, ३ पु· ।

द्विभागशून्यश्चिन्मात्रावभासः स्यादिति भावः । मैवम् । सुषुप्तावात्मन्यव-
भासमानेप्यहङ्कारस्यानवभासमानत्वादितिव्यतिरेकप्रदर्शनेन परिहरति सत्य- १९ ८
मेवमिति । ननु विषयानुभवनिमित्तो द्रष्टृरूपादभासो ऽहमुल्लेखस्तद्रहिते सुषुप्ते
कथमस्य प्रसङ्ग इति चोदयति कथमिति । विषयानुभवनिमित्तो विषयावभासः
स्याज्जडत्वान्न तन्निमित्तचिदात्मपरामर्श इति परिहरति नीलानुषङ्गो यश्चैत-
न्यस्येति । ननु सुषुप्ते द्रष्टृरूपाभावे कथमहमिति तद्रूपपरामर्शो नेत्याह तच्च
यदि नामेति । द्रष्टृत्वं सप्रतियोगिरूपं स चेदमहमर्थो नात्मैवाहङ्कारः
स्यादिति भावः ।

ननु पराग्व्यावृत्तं द्रष्टृरूपं भोक्तृत्वमेव कथं तत्सुषुप्तावनुभूयत इति
चोदयति नन्वहमिति । नाहङ्कारस्य त्वया निष्प्रतियोगिकात्ममात्रत्वाभ्युपग-
मादिति परिहरति नैतत्सारमिति । ननु स्वरूपमपि विषयानुभावादेवाहमि-
ति व्यज्यतां नेत्याह नैतच्छक्यमिति । ततश्च विषयोपरक्तसप्रतियोगिकस्व-
भावस्याहङ्कारस्यात्मत्वं सुषुप्तावनुभवविरुद्धमिदमापत्स्यत इत्याह ततश्च
विषयोपराग इति । आत्मनस्तु सर्वात्मकत्वान्न पराग्व्यावृत्तताहमुपरागादेव
*व्यावृत्त्यवभास इत्यर्थः । भवत्येवेत्यादिः स्पष्टार्थः । यथा पूर्वस्मिन् दिने
ऽहमित्यभिमान†एवासमेवमनुभूते स्मृतिनियमाभावेपि स्मर्यमाणात्ममात्रत्वा-
दहङ्कारस्य सुषुप्तेपि स्मृतिः स्यादित्यर्थः । अहङ्कारादिप्रतिभासस्य नित्यचै-
तन्यरूपस्याविनाशात्तज्जन्यसंस्कारप्रसूता स्मृतिरनुपपन्नेति चोदयति अविना-
शिनः संस्काराभावादिति । परिहारो ह्यस्तनोपीति ।

ननु सिद्धान्ते कथमहङ्कारस्मृतिस्तदवभासिसाक्षिचैतन्यस्य नित्य-
त्वात् । उच्यते । अहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमाप-
द्यते तद्वृत्तिसंस्कारजन्यस्मरणावच्छिन्नमन्तःकरणं पुनः स्मृत्यनुभवावच्छेदक-
मिति स्मरणोपपत्तिः । ननु सुषुप्ता‡वनुभूतसुखस्याप्याश्रयपक्षपातितयाऽह-
मुल्लेखादस्त्येव सुषुप्ते ऽहमनुभव इत्याह नन्वस्त्येव सुषुप्ते ऽनुभव इति । ननु ,, २१
सुखमनुभूतं चेतस्य विषयजन्यत्वाद्विषयानुभवनिमित्त एव तत्राप्यहमुल्लेखः

---

* व्यावृत्ततावभास इति २ पु० ।

† अभिमन्यमान एवासमिति २ उपकल्पितमस्ति । ‡ सुषुप्तावननुभूतेति १ पु० ।

१६ २२।२३ स्यात् इति नेत्याह नात्मनो ऽन्यस्येति । सत्यमस्तीत्यादि: स्पष्टार्थ: । ननु सुखावमर्शस्य मुख्यसुखालम्बनत्वं परित्यज्य कथं विरोधिदु:खाभावविषयतयोपचार: कल्प्यते शाब्दे हि ज्ञाने लक्षणा स्यात् * प्रत्यक्षस्तु सुखावमर्शो न लक्षणामर्हतीति चोदयति कथमिति । मुख्यसुखाभावाद् दु:खाभावस्य लक्ष्यस्य संप्रतिपन्नत्वादिति परिहरति स्वप्ने तावदित्यादिना ।

ननु परामर्शसामर्थ्यादेव मुख्यमेव सुखं कल्प्यतामिति नेत्याह यदि पुन: सुप्त: सुखमिति विशेषत इति । विषयविशेषोपरक्ततयैवेत्यर्थ: । दु:खा-

२० १ भाव एव परामर्शविषय इत्यत्र लिङ्गमाह व्यपदेशोपीति । ननु सुखानुभवस्यापि लिङ्गमस्ति प्रसन्नेन्द्रियत्वादीति तत्राह यत्पुन: सुप्तोत्थितस्येति । तद-

" ३ सदिति स्पष्टार्थ: । उत्तरौ च चोद्यपरिहारग्रन्थौ स्पष्टार्थौ । तस्मान्न सुषुप्तौ भोक्तृतयाप्यहमुल्लेखोनुस्मर्यते इति । नन्वनुभूतेपि भोक्तृतयाप्यहमुल्लेखोनुस्मर्यते इति । नन्वनुभूतेपि न स्मृति† नियम: । सत्यम् । आत्मन्यनुस्मर्यमाणे तावन्मात्रस्याहङ्कारस्याहमित्येव स्मृतिनियम: स्यादित्युक्तम् ।

ननु दु:खाभावो विद्यमानो ऽपि नानुभवितुं शक्यते प्रतियोगिस्मरणाभावात्सम्भवति च‡ मुख्य एव स्वरूपानन्दानुभव: । ननु§ तदपि सुखमविद्यावृतं न प्रकाशमर्हति । न । अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्ते: । जागरणे तर्हि किमिति नावभासते । ‖ भासत एव परमप्रेमास्पदत्वलक्षणं सुखम् तीव्रवायुविक्षिप्त ¶ प्रदीपप्रभावन्मिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते सुषुप्तौ तु ** तदभावादधिकं व्यज्यत इति ।

ननु उत्थितस्य दु:खाभावपरामर्शो विद्यते स कथं प्रतियोगिज्ञानाभावादननुभूत: परामृश्यते । उच्यते । अनुभूतमेव सुखमुत्थितस्यानुस्मर्यमाणन्तत्र विरोधिदु:खाभावमर्थापत्त्या गमयति अनुभूतं चेत्सुखं नास्ति दु:खमिति । अतो दु:खाभावो नानुस्मर्यते किंतु प्रमीयत इति एवमुत्थितस्य ज्ञानाभावपरामर्शोपि ज्ञानविरोधिनो ऽज्ञानस्यानुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते नानुस्मर्यते ।

---

* प्रत्यक्षमुर्वेति ३ पु० ।
† नियम: स्यादित्युक्तम् सत्यमिति ३ पु० ।
‡ मुख्यमेवेति १ पु० ।
§ तदपीति १ पु०, ३ पु० तदपीत्युपकल्पितम् ।
‖ अवभासत एवेति २ पु० ।
¶ प्रदीपस्थदीपप्रभावदिति ३ पु० ।
** तुशब्दो नास्ति १ पु० ।

ननु जागरणेप्यनुभूयमानमज्ञानं कथं ज्ञानविरोधि स्यात् । न । अवस्थाविशेषविशिष्टस्याज्ञानस्य सुषुप्ते ऽनुभवात् तस्य च जागरणेपि घटादिज्ञानविरोधित्वादर्शनात्पटावगमसमये । नन्वस्मर्यमाणत्वादेव ज्ञानानां सुषुप्तौ ज्ञानाभावो * ऽनुमीयते । न । अतिवृत्तज्ञानानामपि सतामस्मर्यमाणत्वात् । प्रातर्गजाभावेपीदानीमनुस्मर्यमाणाद् गजविरोधिपदार्थादर्थापत्त्या प्रमीयते न गजविषयस्मृत्यनुदयमात्राद्व्यभिचारित्वात् । तस्माद्विशिष्टाज्ञानसुखानुभवानुपपत्तिगम्यौ ज्ञानाभावदुःखाभावाविति मन्तव्यम् ।

नन्वज्ञानसुखानुभवयोः साक्षिचैतन्यस्य चाविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात् । उच्यते । अज्ञानगतचैतन्याभासजन्मोपाधित्वादज्ञानसुखसाक्षिविकल्पानुभवस्याज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाश † संस्कारजस्मरणमज्ञानसुखसाक्षिचैतन्याकारमज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते नान्तःकरणाश्रयमिति सर्वथापि सुषुप्ते ऽज्ञानसुखानुभवसम्भवात् असम्बद्धमिदं टीकाकारेणोक्तमिति । सत्यम् । परमतमाश्रित्येदमुक्तं न स्वमतमिति न दोषः । स्वयंप्रकाशत्वाहङ्कारभेदावुक्तावुपसंहरति तदेवं नायं नीलादिप्रत्ययादिति । अहङ्कारभेदस्याप्युपलक्षणार्थं यस्मादात्मनोहङ्कारो भिद्यते तस्मादागम ‡ मूलभाष्यवचनमुपपन्नमित्याह तस्माद् ब्रह्मविदामिति । २० ७ ,, ८

कश्चासावागमः । स एवाधस्तात्स एवोपरिष्टादिति भूमाख्यब्रह्मणः सर्वात्मकत्वमभिधायाथातो ऽहङ्कारादेश इति तस्यापि सर्वात्म § कत्वमुक्त्वा || अथात आत्मादेश इत्यात्मानम् ¶ अहङ्काराद् भेदेन निर्दिशति । ननु जीवब्रह्मणोः सार्वात्म्यव्यपदेशो यथैकत्वसिद्ध्यर्थमेवमहङ्कारस्यात्मैकत्वसिद्ध्यर्थो व्यपदेशः स्यात् । तन्न । द्वयोः सार्वात्म्यायोगात् । तत्र युक्तं भेदेन प्रतिपन्नयोर्जीवब्रह्मणोरेकत्वसिद्ध्यर्थस्तद्व्यपदेशः अहङ्कारस्य तु पूर्वमेवात्मैकत्वप्रतिपत्तेः पृथग्व्यपदेशो भेदसिद्ध्यर्थ इति गम्यते । ब्रह्मणः परोक्षस्य प्रत्य-

---

* अनुमीयतामिति २ पु॰ । † संस्कारजं स्मरणमिति २ पु॰ । ‡ मूलं भाष्येति २ पु॰ ।
§ कशब्दो नास्ति २ पु॰ । || अथात्मादेश इति ३ पु॰ । ¶ अहङ्काराभेदेनेति ३ पु॰ ।

त्वसिद्धये ऽहमात्मत्वमुपदिश्य पुनस्तदुदासेन मुख्यात्मत्वमुपदिशतीत्यर्थः । महाभूतान्यहङ्कार इति च स्मृतिः ।

तर्ह्ययमहङ्कारः किमुपादानः किंनिमित्तः किंस्वरूपः किंप्रमाणकः किङ्कार्यः किमिति सुषुप्ते न भातीति चोदिते सति उच्यत इत्यादिपरिहारः । येयमित्याद्युपादानसङ्कीर्तनम् । अविद्याकर्मपूर्वप्रज्ञेति भ्रान्तिकर्मपूर्वानुभवसंस्कारा इत्यर्थः । तस्या इति निमित्तकारणनिर्देशः । विज्ञानक्रियाशक्तिद्वयाश्रय इति स्वरूपं दर्शयति । * कर्तृत्वभोक्तृत्वेति कार्यप्रदर्शनं कूटस्थचैतन्य इति प्रमाणोपन्यासः । यत्सम्भेदादित्यात्मनि सर्वाऽनर्थारोपनिमित्तत्वं कार्यान्तरमाह । किमिति तर्हि सुषुप्ते न स्यादित्यत आह स च सुषुप्त इति । अज्ञानकार्यलिङ्गशरीरप्रविलयो हि सुषुप्तिरित्यर्थः । ननु सति प्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्तेः प्रविलयः । उच्यते । नाहङ्कारमात्रत्वं प्राणस्य उच्यते किन्तु प्राणस्य पृथक्सतः पञ्चधा व्यापारहेतोरहङ्कारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते मनोधीनत्वादर्शनात्प्राणवृत्तेरिति । प्राणलक्षणक्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य लयः कल्प्यताम् सांशत्वादन्तःकरणस्य । स्वप्नादिवद् दृष्टिसृष्टिमाश्रित्य वा सुषुप्तपुरुषदृष्ट्यभिप्रायेण सर्वस्य तत्र लयो दर्शितः सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति ॥

अत्र सांख्या मन्यन्ते यद्यचेतनं मायाशब्दादिवाच्यम् अन्तःकरणाद्युपादानमिष्टं स्यात् तर्हि तदहङ्कारनिर्भासे साक्षिणि तच्छक्तित्वेन वा तदाश्रयत्वेन वा । † तदधिष्ठानत्वेन वानन्तर्भूतमेव प्रधानं स्वतन्त्रमेव धर्मलक्षणावस्थाभेदैस्त्रिधा परिणमत इति । तत्र धर्मपरिणामो नाम महदादिकृत्स्नकार्यरूपेणावस्थानम् । तस्यैव च धर्मस्यातीतानागतवर्तमानलक्षणरूपापत्तिर्लक्षणपरिणामः । तथाहि । कार्यमनागतलक्षणापन्नं तत्परित्यज्य वर्तमानलक्षणमापद्यते पुनः तत्परित्यज्यातीतलक्षणापन्नं भवति पुनस्तदेव आगामिलक्षणापन्नं भवति । अवस्थापरिणामस्त्वतीतमतीततरमतीततममनागतमनागततरमनागततममिति तत्रैव नूतनचिरन्तनाद्यवस्थापत्तिः अतो न

२० चेतनोपादानेन कृत्यमिति नेत्याह नचैवं मन्तव्यमिति । कुत इति तदाह

* कर्तृत्वभोक्तृत्वैकाधार इति ३ पु० । † तदधिष्ठेयत्वेन वेति ३ पु ।

तथा सत्यऽप्राकृताहङ्कृतिसंसर्ग इति । अहमिति कृतिः करणं यस्मिन्स साऽप्यहंकृतिः । अयमाशयः । चेतनस्यानात्मसम्भेदावभासो नाख्यातिर्नाप्यन्यथाख्यातिर्नापि चात्मख्यातिरित्युक्तम् इदानीं चेतनस्यैव स्वाविद्याविवर्तमानमिथ्यावस्तुसम्भेदावभासलक्षणानिर्वचनीयख्यात्यनभ्युपगमे चेतनाचेतनयोरत्यन्तविविक्तावभास एव स्यात् न सम्भेदावभास इति ॥

अत्र नैयायिका मन्यन्ते । आत्मेन्द्रियविषयेषु समवहितेषु कदाचिद्विज्ञानोदयसामर्थ्यादात्माश्रयज्ञानादिवृत्तीनां क्रमजनने * करणभूतं किञ्चिन्मनः कल्पितम् । तत्र तदतिरेकेणान्तःकरणं नाम ज्ञानसुखदुःखेच्छाप्रयत्नादिविज्ञानक्रियावृत्त्याश्रयमयः पिण्डवदग्नेरादर्शवन्मुखस्याऽयात्रवच्चन्द्रस्यात्मावच्छेदकतया तस्मिन्नऽप्यदारोपोपाधिभूतं किञ्चिन्न पश्यामः । बुद्धिरिति चेत् न । बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमित्यक्षपादसूत्रवचनात् । जानाति बुद्धिरात्मोपलभत इति चेत् न । प्रतिधात्वर्थं धर्मिभेदप्रसङ्गात् तस्माद्वर्णितमन्तःकरणं नास्तीति । तत्राह स च परिणामविशेष इति ।

अयमाशयः । बुद्धेर्गुणेनात्मगुणेन । चैव आराग्रमात्रो ह्यवरोऽपि दृष्ट इति श्रुतौ परिणामगुणवत्तया द्रव्यमित्यवगता बुद्धिः । तथा यदा पञ्चैव लीयन्ते ज्ञानानि मनसा सह । बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते इति श्रुतौ चेष्टाश्रयत्वेन द्रव्यमित्यवगता बुद्धिस्तथा विज्ञानं यज्ञं तनुते इत्यानन्दमयस्यात्मनः पृथगऽभिधानाद् विज्ञानं बुद्धिरित्यनर्थान्तरत्वाद् बुद्धिः क्रियाश्रयत्वेन द्रव्यमित्यवगता । तथा विज्ञानेन वा ऋग्वेदं विजानाति मनसा ह्येव पश्यतीति च करणपक्षपातिनोर्विज्ञानमनसोरेकत्वान्मनसश्च कामसङ्कल्पादिवृत्तिमत्त्वश्रवणादेकमन्तःकरणं विज्ञानक्रियाशक्तिमन्मनआदिशब्दवाच्यं श्रुतिलिङ्गेभ्यः प्रसिद्धम् । तथा बुद्धेर्गुणेनात्मगुणेन चैव सधीः स्वप्नो भूत्वा इमं लोकं सञ्चरति विज्ञानमयो मनोमय इत्यादिश्रुतावात्मावच्छेदकतया स्वगुणारोपगमनागमनादिनिमित्तत्वं चावगतम् । तथा कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामीति श्रुतावुत्क्रान्त्यादुपाधेः प्राणस्याप्यन्तःकरणांशत्वमवगतमयुगपदुपाधिद्वयायोगात् । ततश्च वर्णितमन्तःकरणं श्रुतिलिङ्गसिद्धमिति । नन्व-

* कारणभूतमिति १ पु० ।   † चैवं ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इति २ पु० ।

र्थवादलिङ्गानां न्यायापेक्षा विद्यते । सत्यम् । निरंशसर्वगतासङ्गस्याकाशस्येव निरुपाधेर्गमनपरिच्छेदाद्यनुपपत्तिरेव न्याय इत्यलमतिप्रसङ्गेन ॥

नन्वात्मन एव विज्ञानक्रियापरिणामशक्ती किं न स्यातामिति । निरवयवसर्वगतासङ्गस्य परिणामानुपपत्तेः परिणाम्यन्तःकरणसन्निधानाच्च प्रतिभासस्यान्यथासिद्धेरिति सदृष्टान्तमाह तेनान्तःकरणोपरागनिमित्तमिति । मिथ्यात्वं स्फटिकलौहित्यस्य कृप्रतीतिसत्तयोः कारणाभावादिति भावः । तदुभयाभावमुत्तरग्रन्थेन साधयति । तत्राख्यातिवादिनः स्फटिकगतं मिथ्यालौहित्यमवभासते किन्तु जपाकुसुमगतमेव गृह्यमाणं स्फटिकादविविक्तमेवावभासत इति चोदयति कथं पुनः स्फटिक इति । नैतदित्याह यदि स्फटिकप्रतिस्फालिता इति ।

ननु दोषबलादिन्द्रियस्य कुसुमसंयोगाभावान्न सन्निवेशग्रहणमिति २ नेत्याह नहि रूपमात्रनिष्ठ इति । संयुक्तसमवायात् संयोगाद्वा गुणग्रहणे द्रव्यमपि संयुक्तमिति भावः । अन्यथाख्यातिवादी रूपमात्रं प्रतिबिम्बितं स्फटिकात्मना प्रतिभातीति वक्ति तन्नेत्याह नापि स्वाश्रयमिति । तर्हि स्फटिकदेशे लौहित्यं सद्रव्यमेवाविविक्तं स्फटिकात्मना वा गृह्यते इति चोदयति नन्वभिजातस्येवेति । तथाप्यन्यथाख्यातौ संसर्गमिथ्यात्वमित्याह तथापि स्वयमलोहित इति ।

२१

अख्यातिवादिनो मत * मादत्ताति अथ प्रभैव लोहितेति । तर्हि स्फटिकग्रहणे संयुक्तसमवायकारणपौष्कल्यादप्रतिबद्धसंयोगाद् वा रूपग्रहणमपि स्यादित्याह शौक्ल्यमपि तर्हीति । विरोधिगुणया प्रभया विरोधिगुणस्यापसारणं प्रतिबन्धो वा कृत † इति शङ्कते प्रभयापसारितं तदिति । अपसारणे ‡ दोषमाह स तर्हि नीरूप इति । प्रतिबन्धश्च § द्रव्यस्यापि समानः गुणद्वारा विरोधिसाम्यादित्यर्थः । रूपहीनमपि द्रव्यं रूपिप्रभासंयोगाच्चाक्षुषं ‖ स्यात् इत्याशङ्क्याह न च रूपिसंयोगादिति । तर्हि शौक्ल्यमपसार्य लौहित्यस्योत्पन्नत्वा-

---

* आददातीत्येव पु॰ त्रयेऽपि पाठः, "आङो दोऽनास्यविहरणे" इत्यात्मनेपदन्तूच्चारणक्रियाणामास्यव्यादानस्यावर्जनीयत्वान्न भवतीति प्राग्वोचद्भावप्रकाशिका ।

† इत्याशङ्कत इति २ पु॰ । ‡ दूषणमिति २ पु॰ । § चो नास्ति २ पु॰ ।

‖ चाक्षुषमपीति १ पु॰ ।

रूपवत्तया चाक्षुषः स्फटिक इति नेत्याह न प्रभानिमित्तमिति । अभ्युपगम्य प्रभामित्यादिः स्पष्टार्थः । ततश्चोपरक्ताहङ्कारनिमित्तमात्मनि कर्तृत्वाद्यारोपणमित्याह तदेवमिति । नन्वहङ्कारधर्मस्यात्मन्या * रोपमात्रं क्रियते किं वा मिथ्यैव धर्मान्तरमुत्पद्यते इति । पूर्वस्मिन् नायं दृष्टान्तो ऽन्यथाख्यातिश्च स्यादुत्तरस्मिन्सत्यमिथ्याकर्तृद्वयावभासः स्यात् । उच्यते । अहङ्कारस्य स्वधर्मसहितस्यैवात्मन्यध्यस्ततया मिथ्यात्वान्नान्यथाख्यातिप्रसङ्गो ऽन्यसन्निधानादन्यस्मिन्मिथ्याधर्मावभास इत्येतावति दृष्टान्तः । अथवा । कर्तृद्वयेपि धर्मिणोरेकत्वापत्त्या धर्मभेदानवभास इत्यविरोधः ।

ननु भिद्यते हृदयग्रन्थिरित्यादौ हृदयग्रन्थिरात्मनि अनर्थहेतुरिति गम्यते तत्कथमहङ्कारस्योच्यते इति तत्राह ततः संभिन्नोभयरूपत्वादिति । २१ १२ नन्वात्मा स्वात्मन्युपरक्ताहङ्कारस्तद्धर्मादीन्नावभासयेत् उपरक्तत्वसाम्यात्स्फटिकादिवदिति तत्राह तत्र जड़रूपत्वादिति । † जाड्यचैतन्ये अवभासकत्वानवभासकत्वयोर्निमित्ते नोपरक्तत्वानुपरक्तत्वे इत्यर्थः । ननु चेतनस्याप्युपरक्तविषयज्ञानव्यापारशून्यत्वाज्जाड्यादविशेष इति तत्राह चिद्रूपस्य पुनरिति । अव्यवधानेन चित्संसर्ग एव प्रतिभासहेतुर्न ज्ञानव्यापार इति भावः । ननु साक्षिस्वरूपवद्बुद्धिज्ञानक्रियाव्यवधानमन्तरेणाहङ्कारस्य सिद्धौ कथमिदमंशतेति तत्राह तेन लक्षणत इति । अर्थस्वभावत इत्यर्थः । ‡ अर्थतश्चित्स्वरूपता ऽनिन्दमंशता चैतन्यकर्मता चेदमंशतेति § न ज्ञानक्रिया ‖ व्यवधानेनेत्यर्थः । व्यवहारतः पुनः कथंभूतस्येदमंशतेति तदाह व्यवहारतः पुनरिति । यदुपरागात् यस्याहङ्कारस्योपरागादित्यर्थः । ¶ तदात्मन इति । तदात्मतामहङ्कारात्मतामापन्नस्येत्यर्थः । तद्व्यापारेणाहङ्कारव्यापारेणेति । वृत्तिव्यवधानसिद्धिरेव शरीरेन्द्रियविषयाणाम् इदमिति प्रतिभासितानामव्यवधानसिद्धिरेवानिदंप्रतिभासितेति भावः । नन्वज्ञानव्यवहितोहङ्कारः कथमव्यवधानादिदंतावभासाभावः स्यादित्यत्राहात एवाहमिति । अनिन्दन्ताप्रतिभासादेव अज्ञान- ,, १८

---

* आरोपणमात्रमिति २ पु॰ । † जाड्यचैतन्येत्वनवभासकत्वावभासकत्वयोरिति २ पु॰ ।
‡ अर्थतस्तु चिदिति २ पु॰ । § इतिशब्दो नास्ति २ पु॰ ।
‖ व्यवधानेनेत्यर्थ इति २ पु॰ ।
¶ तदात्मनोऽहङ्कारात्मतामापद्यमानस्येत्यर्थ इति २ पु॰ ।

मात्रव्यवधानादेवेत्यर्थः । नन्वर्थतो युष्मदर्थत्वे तथाप्रतिभासाभावो न युक्त इत्यत्राह दृष्टश्च लक्षणत इति । ननु तत्र विमर्शेपि * मृन्मयव्यवहारो न जायते इह तु विमर्शे युष्मदर्थता व्यवह्रियते अतो नायं दृष्टान्त इत्यत आह व्युत्पन्नमतयस्त्विति । अत एव निपुणतरमभिवीक्ष्येत्यादिः स्पष्टार्थः ।

यदि स्फटिकोदाहरणेनैवात्मन्यनात्माध्यासः सिद्धो न तर्हि दर्पणजलाद्युदाहरणेन वेदान्तविहितेन कृत्यमिति तत्राह यत्पुनर्दर्पणजलादिष्विति । ननु प्रत्यङ्मुखताभेदावभासाभ्यां वस्त्वन्तरे बिम्बात्प्रतिबिम्बे प्रत्यक्षे

२२ २ कथमेकत्वप्रमाणमन्तरेण तदेव तदिति चोदयति कथं पुनस्तदेव तदिति । व्यक्तिप्रत्यभिज्ञानादिति परिहरति एकस्वलक्षणत्वावगमादिति । नन्वभिज्ञायां भेदप्रतिभासः कथं प्रत्यभिज्ञया बाध्यत इति तत्राह न तद्वस्त्वन्तरत्व इति । ननु व्यक्तिगतयोरैक्यभेदावभासयोः केन किं बाध्यमिति † विशये व्यक्तिभेदस्तत्रोपपत्तिशून्यत्वाद्बाध्यत इत्याहापि चार्थाद्वस्त्वन्तर इति । दर्पणावयवा एव व्यक्त्यन्तराकारेण परिणता इति वाच्यम् । अन्यथा ‡ व्यक्त्युत्पत्त्यपायाभावादिति भावः । ननु मुखलाञ्छितप्रतिमुद्रेयं न परिणाम इति नेत्याह विरुद्धपरिमाणत्वादिति । अस्तु तर्हि परिणाम इति नेत्याह तथा सतीति । ननु दृश्यते एव सर्वदा । नैवम् । दर्पणस्य तिर्यङ्निरीक्षणे पूर्वोत्पन्नमुखदर्शनाभावात् ।

ननु निमित्तकारणापायेपि कार्यमपैति यथा वैशेषिकाणामपेक्षाबुद्धिविनाशे द्वित्वादिविनाशो हस्तसंयोगापाये च कटविवरणापाय इति नेत्याह न खलु संवेष्टित इति । सर्वत्राग्निसंयुक्तद्रुतताम्रादाविव पुष्कलकारणेन विरुद्धकार्योदयादेव पूर्वकार्यविनाशः वैशेषिकाणां च प्रक्रियामात्रम् । तद्द्वित्वादेर्वस्तुसहभावित्वादिति भावः । ननु संस्कारजन्यकार्यान्तरोदयात्पूर्वकार्य-

,, १० विनाशो न निमित्तकारणापायादिति कुत इति तत्राह तथा च यावदिति । निमित्तापायमात्राद्विविवरणापायः संस्काराभावे § संवेष्टितेति भावः । इहापि तर्हि पूर्वसंस्थानस्य चिरकालं संस्थानसंस्कारबलाद्विरुद्धकार्योदये प्रतिबिम्बा-

---

* मृण्मय इति २ पु ।

† विशयो नाम संशयः, विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरमित्यादौ तथादर्शनात् ।

‡ व्यक्त्युपायेति १ पु  व्यक्त्यन्तरापायाभावादितीति ३ पु । § अपिशब्दोऽधिकः २ पु ।

पाय इति चेत् न । उत्पन्नदर्पणमात्रे चिरकालावस्थितमुखपरिणामसंस्कारेऽपि बिम्बापायमात्रात्प्रतिबिम्बापगमदर्शनादित्याह एवं चिरकाल इति । २२ ११

ननु चिरकालावस्थितविकासपरिणामसंस्कारप्रचयेऽपि सवितृकिरणापाये विकासापायदर्शनवच्चिरकालावस्थितप्रतिबिम्बापायेऽपि बिम्बापाये स्यादिति नेत्याह यः पुनः कमलमुकुलस्येति । ननु निमित्तकारणापाय एव तत्रापि निमित्तं न पार्थिवाद्यवयवजन्या मुकुलतेति तत्राह तदुपरम इति । आदर्शेऽपि तर्हि मुखविपरीतकार्यपरिणामहेतुः कल्प्यतामिति नेत्याह नादर्शे पुनरिति ।* कारुकर्मापेक्षं चादर्शतत्त्वजन्मेति भावः । किंच । सत्यपि बिम्बसन्निधाने दर्पणद्रव्यं† मुखाकारं कर्तुं दाहच्छेदादिबहुप्रयत्नदर्शनात् स्पर्शगो‡ चरत्वाभावाच्च । अवयवव्यवधाने चानुपत्त्वमपि न स्यादित्यभ्युच्चयः । तत्रायं प्रयोगः§ न दर्पणादौ मुखव्यक्त्यन्तरमस्ति तज्जन्मकारणशून्यत्वात्|| शशमस्तकविषाणवदिति ।

तर्हि शुक्तिकारजतवन्मिथ्यात्वोपपत्तेर्नैव मुखैकत्वमिति चोदयति अत्राहेति । ननु प्रत्यभिज्ञयैकत्वमवगतमिति नेत्याह• शुक्तिरजतस्येति । मिथ्यारजतेऽपि प्रत्यभिज्ञा दृश्यते मदीयमिदं रजतमितीत्यर्थः । उत्तरमाह मैवम् तत्र हीति । तत्र नेदं रजतमिति रजतस्वरूपमेव बाध्यते नात्र रजतं किन्तु तदिदं रजतमिति देशमात्रबाधया सत्यरजतैकतया न प्रत्यभिज्ञायते अतो रजते ऽभिज्ञाबाधात्प्रत्यभिज्ञा विभ्रम इत्यर्थः । इह तु नेदं मुखमिति न स्वरूपेण बाध्यते किंतु नात्र मुखं मदीयमेवेति प्रत्यभिज्ञायते नच सा बाध्यते । व्यक्त्यन्तरत्वे च नात्र मुखमस्तीति न बाधः स्यादित्यर्थः । यत्पुनरिति स्पष्टार्थः । ननु स्वमुखावयवानामप्रत्यक्षत्वात्कथं प्रत्यक्ष* प्रत्यभिज्ञा । न । कतिपयावयवदर्शनादपि लोकवदवर्यावनश्चानुपत्त्वोपपत्तेस्तत्त्वमसिवाक्यं त्वंपदार्थबाधनिमित्तं संसारिणो विमाशमन्तरेण मोक्षानुपपत्तेरतो नायं दृष्टान्त इति चोदयति ननु तत्त्वमसिवाक्यादिति । सोऽयं देवदत्त ,, २१

---

* कारुककर्मापेक्षमिति १ पु० ।
† मुखाकारं इति २ पु० ।
‡ गोचरताभावादिति ३ पु० ।
§ दर्पणादौ नेति १ पु० ।
|| शशमस्तके विषाणवदिति ३ पु० ।
¶ शुक्तिकारजतस्येति ३ पु० ।
• प्रत्यभिज्ञानमिति २, ३ पु० ।

इति तादात्म्यपरं न परार्थबाधपरमिति परिहरति मैवमिति । किंच शास्त्रीयेऽपीति स्पष्टार्थ: ।

न वारिस्थमित्याऽऽदित्यस्य वारिस्थतोपजीव्यते । अख्यातिवादी न विम्बादन्यत्वेन प्रतिविम्बं नाम दर्पणगतमवभासते किंतु विम्बमेव दर्पणादविविक्तं प्रकाशत इतिवदति तदनुवदति यस्तु मन्यत इति । स्पष्टप्रत्यङ्मुखाद्यवभासं दर्पणान्तरानुप्रविष्टमिव स्वमात्मानं पुरुषान्तरवन्निरीक्ष्यमाणमिवेदं यादृग्दृश्यमानं मुखं तथा नावभासत इति वदन् कथमाप्त: स्यादित्याह

२३ ४ तमनुभव एवेति ।

ननु मूर्तद्रव्यस्य युगपत्कार्त्स्न्येन देशद्वयवर्तित्वं लोके न क्वचिदपि दृष्टमिति चोदयति कथं पुन: परिच्छिन्नमिति । एकमेकदेशस्थमेव मुखं भ्रमाद्भिन्नं भिन्नदेशस्थं * वावभासत इत्याह न वयमिति । किं पुनरिदमेकस्मिन्नेकदेशवस्तुनि भेदभिन्नदेशत्वलक्षणं वस्त्विति तदाह विच्छेदस्त्विति । ननु माययापि प्रमाणविरुद्धं कथमवभासत इत्यत आह नहि मायायामिति । ननु विच्छेदावभास: कथम् † अविद्याविजृम्भितो यावतोर्ध्वाग्रोऽपि स्पष्टमवभासमानो वृक्षो ऽधोग्रो ‡ जले प्रतीयते नच तत्राज्ञानमस्तीति । उच्यते । नच विषयावरणमज्ञानमध्यासहेतुरित्युक्तम् तत्रौपाधिकभ्रमेषूपाधिरेव आत्माविद्यापरिणामे पुष्कलकारणं नचाधिष्ठान § याथात्म्यस्य ज्ञानं सोपाधिकभ्रमेष्वध्यासविरोधि किंतु निरुपाधिकभ्रमेष्विति द्रष्टव्यम् ।

ननु सोपाधिकभ्रमत्वे भेदकर्तृत्वाद्यध्यासस्य न तत्वज्ञानादध्यासनिवृत्ति: किंतु उपाधिमात्रनिवृत्त्येति चोदयति ननु सत्येव विम्बैकतावगम इति । ‖ चोदितदोषं परिहर्तुमाशङ्कान्तरं प्रथमं निवर्तयति कथं जीव: प्रतिविम्बश्चेत् न विम्बात्मतामवगन्तुमलं प्रतिविम्बत्वात् अक्षिपात्रगतदेवदत्तप्रतिविम्बवदित्येतन्निराचष्टे देवदत्तस्याचेतनांशस्येति अचेतनत्वप्रयुक्ता तत्रानवगतिर्न प्रतिविम्बत्वप्रयुक्ता घटादिषु तथादर्शनादिति भाव: । ननु शरी-

,, ११ रमेव चेतनमिति लोकायतस्तत्राह सचेतनांशस्यैवेति । दर्पणजाड्येन ¶ प्रतिबन्धात् स्वभावजाड्याद्वेत्यर्थ: । देवदत्तप्रतिविम्बस्याचेतनत्वे हेत्वन्तरमाह

---

* चावभासत इति ३ पु० । † अविद्यया विजृम्भित इति १ पु० । ‡ जलेषु इति २ पु० । § याथात्म्यज्ञानमिति २ पु० । ‖ चोदितं दोषमिति २ पु० । ¶ प्रतिबन्धकत्वादिति ३ पु० ।

